जैनाचार्यश्रीमद्विजयानन्दसूरीश्वरेभ्यो नमो नमः ।

श्रीमत्सिद्धसेनसूरिपुरन्दरविरचितम्

# श्रीएकविंशतिस्थानप्रकरणम् ।

जैनाचार्य न्यायाम्भोनिधि श्रीमद्विजयानन्दसूरीश्वराऽपरनाम
श्रीमदात्मारामजीमहाराज शिष्यवर्य्य-दक्षिणविहारिश्री
मद्अमरविजयमुनिपुङ्गवचरणेन्दीवरमिलिन्दायमान-
चतुरविजयमुनिविरचितबोधिदीपिकानाम
वृत्तिसमलङ्कृतम् ।

टीकाकारगुरुभ्रातृश्रीमद्देवविजयमुनिवरसदुपदेशेन सीनोर
वास्तव्यश्रेष्ठि श्रीखीमचन्द्र फूलचन्द्र इत्यनेन
स्वतातस्मृत्यर्थं श्रेयोऽर्थं च प्रकाशितम् ।

| | | |
|---|---|---|
| वीर सं २४५० | प्रथमावृत्ति | आत्म सं २९ |
| विक्रम सं. १९८० | ५०० | ईस्वी सन् १९२४ |

मूल्य सदुपयोग

प्रकरणमिदं साधुसाध्वीभ्यां भाण्डा
गारेभ्यश्चोपहारीक्रियते ।

वडोदरा—लुहाणामित्र स्टीम प्रिं प्रेसमां अंबालाल विट्ठलभाई द्वारे
प्रकाशक माटे छाप्युं ता १५-६-२४

मगावनारे पोष्ट खर्चनो एक आनानी टिकिट मोकलवी

मळवानुं ठेकाणुं —
शा भीमचंद फूलचंद
मु सीमोर थाया भायागाम—रेवाकांठा

जैनाचार्य-न्यायाम्भोनिधि-श्रीमद् विजयानन्दसूरीश्वरजीना लघुशिष्य

दक्षिणविहारी-श्री **अमरविजयजी महाराज**



जन्म संवत १९११ ना फाल्गुण शुदि १०

दीक्षा संवत १९३६ ना वैशाख शुदि ७

શિનોરવાસી શા ગુલાબચંદ ગિરધરભાઈએ પોતાની સ્વ સધર્મચારિણીના શ્રેયાર્થે તથા ગુરુભક્તિ નિમિત્ત આ ફોટો દાખલ કરાવ્યો છે

दक्षिणविहारिमद्गुरुवर्यं श्रीमदमरविजयमुनिपुङ्गव

## गुणस्तुत्यष्टकम्

" मन्दाक्रान्तावृत्तम् "

श्रेयोलक्ष्मीं विमलहृदयोऽयोद योऽभूदलक्ष्यो
योऽगाहाऽर्हत्समयजलधिं बुद्धिनावा गभीरम् ।
यस्माऽगृहेन्द्रियवरमर यो व्यपोढोपसर्गान्
सोऽय दद्यादमरविजय सद्गुरुमङ्गल न ॥१॥
श्रीभीक्ष्म विमलयशसा पायसेवाऽम्बुवाहो
योऽर्यणिव प्रचुरतपसा तेजसेवोष्णरश्मि ।
यस्माऽवर्तीत् समयमनघ मूर्तिसिद्धिप्रधान
सोऽय देयादमरविजय सद्गुरु मद्गति न ॥२॥
श्रीणांयीयोऽयगुणनिवह शुद्धचेता परेषा
नैषाऽश्रावीत् प्रतिदिनमर याऽश्रसीद्वचेसा य ।
धर्म्यं कार्येऽयमदमलधीरक्षुभक्तो सगोवस्या
सोऽय दिश्यादमरविजय सद्गुरु म-मति न ॥३॥
अस्वारसीधा भवज-निधिं याढयाचिवदुग्र
योऽगोपायीत् स्वनिकरमर पापथैमयान्तम् ।
यस्माऽदासीदूभविजनगणस्या तमदोऽशलिसम
सोऽय छिन्द्यादमरविजय सद्गुरुर्माऽघजाल ॥४॥

अस्प।यिराऽमन्गुणगणे शीतरोचियरणै-
योऽवर्स्तिराऽऽहतपधि सदा मुक्तये याऽन्यरिह ।
यथाऽभाभीत् स्मररिपुबल शीलसन्नाहशाली
साऽय कुर्यादमरविजय सद्गुरुर्न सुखानि ॥५॥

अत्याक्षीद्यो गृहमघभिदे जैनदीक्षामथाभीद्
भक्त्याऽभाभीत् सुगुरुविजयानन्दसूरिप्रमाऽञ्जम ।
तानथाभीज्जिनमतरहस्यानि गूढार्थभाञ्जि
साऽय तन्यादमरविजय सद्गुरुर्न प्रबोधम् ॥६॥

श्र मपथ योऽदित हितमति योऽधित प्राणिवर्गे
यानाऽस्विन्नाऽऽपदि सुमहतोऽभित्त याऽन्तर्द्विषश्च ।
पाप्माऽहार्षीद् घनमसुमता यो व्यहार्षीद्धरित्र्यां
सोऽय भिन्द्यादमरविजय सद्गुरुर्नोऽन्तरारीन् ॥७॥

विश्व विश्व विमलयशसा योऽन्तरिक्षाऽकरीद्वा
ऽतद्विद्वन्मैत्र्य सुमतिमनिश योऽपरीष्ट प्रकामम् ।
योऽप्राप्सीन्नो निजगुणगणैर्माऽकुपत् यर्हि यस्मै
सोऽय पुष्यादमरविजय सद्गुरु सम्पदं न ॥८॥

इत्थ स्फूर्जत्सुगुरुचरणाम्भोजभक्तायमानो
भक्त्या नुन्नश्चतुरविजयश्चेतसि प्रस्फुरन्त्या ।
दुष्कर्मौघक्षितिधरपविं तद्गुणग्रामलेशं
स्वश्रेयोऽर्थं स्तुतिपथमनैष यथाशक्त्यशक्त ॥९॥

# प्रस्तावना

सज्जनगण !

समाश्रियतां महदपूर्वपदवीं क्रियमाणं तीर्थङ्कराणां च्यवन विमान नगरी प्रमुख जन्याद्येकविंशतिपदप्राप्तप्रमेयविंशतिस्थानाभिधानमेतद् यथार्थनामकं प्रकरणरत्नम् ।

यद्यपि प्रान्तभागेऽस्य—

> इय इक्कवीसठाणा उद्धरिय सिद्धसेणसूरीहिं ।
> चउवीसजिणवराणं असेससाहारणा भणिया ।

इत्येतदुल्लेखदर्शनेन श्रीसिद्धसेनसूरयोऽस्य प्रणेतार इति प्रकटमेवावगम्यते तथापीह जिनशासनवर्तिष्वनेकेषु गच्छेषु

१ श्रीसम्मतितर्कादिग्रन्थविधानवेधाः सुप्रसिद्धनामधेयः श्रीमत्सिद्धसेनदिवाकरः ।

२ तत्त्वार्थसूत्रटीकाकर्त्ता दिन्नगणिसन्तानीयसिंहसूरिशिष्य सिद्धसेनसूरिः ।

३ बप्पभट्टिसूरिसन्तानीययशोभद्रसूरिगच्छभूषणयशोदेवसूरिशिष्याः धंधुकानगरे सं ११२३ वर्षे "साहारण" शब्दाङ्कितशृङ्गारमञ्जरीबन्धुरप्राकृतापभ्रंशपद्यमयविलासवइकहानामककथारत्नसूत्रधारः साधारणेति पर्यायनामा सिद्धसेनसूरिः ।

४ वि सं ११४२ (?) वर्षे प्रवचनसारोद्धारबृहद्वृत्तिविरचयिता चन्द्रगच्छीयप्रद्युम्नसूरिपरम्परागतदेवभद्रशिष्य सिद्धसेनसूरि ।

५ सरस्वत्यापगातटे सिद्धपुरपत्तने सिद्धचक्र (नमस्कार) महात्म्यप्रणेता सिद्धसेनसूरि ।

६ *श्रीसिद्धिसागर (?) सूरिसन्तानीय सिद्धसेनसूरि ( सं १२९४ )

७ श्रीनाणकीयगच्छभूषा सिद्धसेनसूरि ( सं १४३२ )

इत्यादयो ग्रन्थकर्तृत्वेन सुविदिता अभूवन् परमेतेषां मध्यात् कतमा अस्य प्रकरणरत्नस्य प्रणेतारः सम्भवेयु ? कदा कतमं च महीमण्डलं मण्डयामासुरिति विशेषजिज्ञासायां ' असेमसाहारणा भणिया ' इत्यत्तदुल्लेखदर्शनात् साधारणशब्दाङ्कितकृतिकारा एवास्य विरचयितार इति सुस्पष्टमेव ।

सत्तासमयस्त्वेषां विलासवइकहा विरचनकालो द्वादश-शताब्द्याः पूर्वार्धरूपः सम्भाव्यते ।

सत्तरिसयट्ठाणपयरणं सोमतिलकसूरिणैतदनु वि सं १३८७ वर्षे विहितम् । अट्ठतुस्तव ( सं गद्य ), शाश्वतजिनस्तुति ( प्रा, गा ३४ ) एतेषां कृतित्रया गीयते । ' साहारणो त्ति नाम सुपसिद्धो अत्थि पुव्वनामेण । थुइ-थोत्ता बहुभेया जस्स पढिज्जंति देसेसु ॥ "

* मुनिजिनविजयसम्पादिते प्राचीनलेखसंग्रहद्वितीयभागे लेखाङ्क ५३०-३१ ।

इति विलासवतीकथाप्रान्त ( जेसलमेरभा सूची गा ऑ सिरीझ् सस्थया मुद्रापिता पृ १९ ) प्रशस्त्युल्लेखतोऽन्यान्यपि स्तुतिस्तोत्राणि सम्भाव्यन्ते । नमस्कारमाहात्म्यकर्ताऽप्ययमेव सिद्धसेनसूरिरिति निर्णेतु न साधनम् । सूरिवर्यस्यान्यान्याऽपि कृति सम्भवेत् । वरिवर्त्ति तादृपत्र ५८ लिखिताऽणहिल्लपुरद्वितीयभाण्डागारेऽस्य टीकेति जैनग्रन्थावल्या ज्ञायते, पर न तत्र बहुशो गवेषिताऽपि प्राप्तेति नूतनवृत्तिचिकीर्षां विज्ञाय मे गुरुभ्राता चतुरविजयमुनिना बोधदीपिकया वृत्या समलमकारि ।

एतद्ग्रन्थप्रसिद्धये मयोपदिष्टै सीनोरवास्तव्यै
७५ शा खीमचद फूलचदभाई ( माजरोळवाळा )
२५ शा मगीनदास नरोत्तमदास चोकसी
२५ शा छोटालाल हरगोविंददास ( सिमरीवाळा )
इत्येभिरुदारचित्तैर्महाशयैर्द्रव्यसाहाय्य वितीर्णमत प्रशस्येयमुदारताऽमीषा, अनुकरणीयोऽय पन्था अन्यैरपि श्रीमद्भि

प्रुफसशोधनादि स्वयमकारि सावधानतयाऽस्य टीकाकर्त्रा तथापीह कुत्रचन प्रमादाचरणाज्जिनागमविरोधोऽनुचित्र भवेत्तदा सशोधयन्तु परोपकारकरणरसिकान्तःकरणा मतिमन्त इति प्रार्थयते श्रीमदमरविजयमुनिपदकमलसेवाहेवाकी देवविजयो मुनि ।

ता १-७-२४ — स्थल—सीनोर (रेवाकाठा)

## शुद्धिपत्रकम् ।

| पृष्ठ | पंक्ति | अशुद्धि | शुद्धि |
|---|---|---|---|
| २ | ४ | यच्छ्तु | यच्छ्तु मे |
| २ | १० | कुवन् | कुर्वन् |
| ३ | १६ | मातर | मातर |
| ३ | १६ | पाद रणे | पादपूरणे |
| ५ | १७ | अघम्तन | अधस्तन |
| ७ | १७ | कण्डग्राम चेनि | कुण्डग्रामश्चेति |
| ८ | १७ | गायाद्वयाथ | गायाद्वयार्थ |
| ९ | ७ | दवी १८ | देवी १८ |
| ११ | १२ | सुपाश्वम्य | सुपार्श्वम्य |
| ११ | १३ | -धनु | धेनु |
| १४ | ४ | नैत्रति | नैत्रति |
| १४ | ५ | सैंसति | संसति |
| १४ | ८ | किमुक्त | न्सुिक्त |
| १४ | १० | धमजिन | धर्मजिन |
| १५ | ५ | नात्तार | नात्तरि |
| ३९ | ५ | दधिपण | दधिपर्ण |
| ३९ | १० | महिस्वामि | महिस्वामिन |



श्रीमद्विजयानन्दसूरिपुरन्दरचरणारविन्दाभ्यो नमः ।

श्रीसिद्धसेनसूरिविरचितम्

# श्रीएकविंशतिस्थानप्रकरणम् ।

---

अर्हम्

श्रेय'श्री' सदने तनोति वसतिं यत्सेवया देहिना
ग्रोपं समृतिसागरः श्रयति च व्युच्छिन्नविपत्तद्विप ।
पादाब्जेऽमरदैत्यभूमिपतयो भक्त्या नमन्त्यन्वह
सानन्द प्रणमाम्यर सन्निधि ता जैनीं चतुर्विंशतिम् ॥१॥
श्रीतीर्थभर्तुस्त्रिपदीमवाप्य स्याद्वादवाचां भविना हिताय ।
ये द्वादशाङ्गीमनघां प्रणिन्युर्हिताय न सन्तु गणाधिपास्ते ॥२॥
यत्पादपद्म हृदये निधाय भवाब्धिशान्ति भविनो भजन्ते ।
सज्ज्ञानदातारमर मुनीन्द्र त सद्गुरु भक्तिभरेण वन्दे ॥३॥

यस्याः कृपालाबुसमाश्रयेण
मन्दोऽपि पारं श्रयति श्रुताब्धेः ।
वाङ्मालया सा भुवनं पुनाना
सरस्वती यच्छतु    सुबुद्धिम् ॥ ४ ॥

कृपापूर्णदृशैतेषां स्वान्येषां हितकाम्यया ।
श्रीएर्कारिशनिस्थानटीकां कुर्वे यथामति ॥५॥

शब्दार्थयोर्न काठिन्यं ग्रन्थेऽत्र विद्यते क्वचित् ।
स्वपरभ्रान्तिनाशाय प्रयत्नो मे तथाप्ययम् ॥६॥

दुष्प्रापमाप्य नृत्वं यतितव्यं श्रेयसे यथाशक्त्या ।
इति शिष्टगिरा शृण्वन् मूढोऽप्येनां न हास्ये स्याम् ॥७॥

इह किल चूर्णपथ पिष्टाऽनल्पदुर्जन्मजरामरणाधिव्याधिस्वष्ट-विरहानिष्टसंयोगदारिद्र्यादिदुरन्तदुःखनिबन्धनानिष्ठदुष्टकर्माष्टकाना,

निरावरणाऽप्रतिहताऽनन्तविमलकेवलालोकालोकितानेकस्सर-ल्लोकालोकाना, सकलकलिकालव्याप्तदूरविसरान्तर्वर्तिभव्यजन्तु-जातपरित्राणकर्मकर्मठमनुपदेशपीयूषरसपूरपूरितत्रिविष्टपाना,

भक्तिभरानम्रनरसुरासुरेश्वरनिकरकिरीटकोटिस्थितवरसिंगरत्नरोचि-र्निचयरोचिष्णुतरचरणारविन्दयुगलानामामनोपकारिणामप्रमादिचतु-

विंशतितीर्थंकृतामेकविंशतिस्थानान्याचिख्यासुः श्रीसिद्धसेनसूरिशे-खरः प्रथम स्थानद्वारगाथाद्वितयमाह–

चवणविमाणा १ नयरी २
जणया ३ जणणीउ ४ रिक्ख ५ रासी ६ य ।
लछण ७ पमाण ८ आऊ ९
वण्ण १० तर ११ दिवस १२ तव १३ भिक्खा १४ ॥१॥

नाणट्ठाण १५ गणहर १६
मुणि १७ अज्जिसमण १८ जक्ख १९ देवीओ २०।
सिद्धिट्ठाण २१ च इमेग सादिमो जिणवरिंदाण ॥२॥

व्याख्या—'चवण' इत्यादि, जिना-अवधिज्ञानिप्रभृतयस्तेषां वरा केवलिनस्तेषामिन्द्रा इवेन्द्राः पूज्यत्वात् जिनवरेन्द्रास्ते चातीतानागतवर्तमानकालापेक्षयाऽनन्तास्तथापि साम्प्रतकालीनावसर्पिण्या सञ्जातत्वादासन्नोपकारकारित्वाच्च ऋषभादिवर्द्धमानान्तास्ते चतुर्विंशतिस्तीर्थकृत एवात्र विवक्षितास्तेषां च्यवनविमानानि १,जन्मनगर्यः २,जनकाः-पितरः ३,जनन्यो मातरः ४,'तु' पुनः, ऋक्षाणि जन्मनक्षत्राणि ५, जन्मनक्षत्रानुसारेण मेषाद्या राशयः ६,'च' पादपूरणे,लाञ्छनानि-उरःस्थितरोमरूपाणि जनचरणादिस्थितानि वा चिन्हानि ७,'पमाण'

शरीरदैर्घ्यप्रमाण ८, आयु सर्वायुष्कं ९, वर्णो रक्ताद्य १०, ततो 'अ-
तर' त्ति, जिनान्तराणि-एतस्माज्जिनादपरो जिन कियता कालव्यवधानेन
सिद्ध इत्यन्तराणि ११, दीक्षा प्रव्राज्या, इह दिक्खेति सामान्य-
शब्दनिर्देशात् यस्मिन् वयसि यावता श्रमणपरिवारेण यत्र स्थाने
जिनैर्दीक्षा गृहीता तत्सर्वं वक्ष्यति १२, तप दीक्षाग्रहणकालीन तप
१३, भिक्षा प्रथमपारणा अत्र च प्रसङ्गत कियत्तपोऽन्ते केन द्रव्येण
किंनामधेयेन पुसा भगवतामाद्यपारणकानि कारितानीत्यपि दर्श-
यिष्यति १४, ज्ञानस्थान केवलज्ञानोत्पत्तिस्थान, उपलक्षणत्वात्
यत्तपोऽन्ते यत्वृक्षाधश्च केवलज्ञानमुत्पेदे तदप्यभिधास्यति १५,
तथा जिनाना सत्कानि ये गणधराश्च मुनयश्च आर्यिकाश्चेति समाहार-
द्वन्द्वस्तान पर्यन्तवर्ति 'सत्त' इति शब्दसम्बन्धाज्जिनाना ऋष
भादीना प्रत्येक ये गणधरास्तेषा सङ्ख्या १६, तथा तेषामेव ये
मुनय —साधवस्तेषा सङ्ख्या १७, तथा तेषामेव या आर्यिका —
साध्व्यस्तासा सङ्ख्या १८, तथा जिनाना यक्षा १९, देव्य —
शासनदेवता २०, तथा सिद्धिस्थान—मोक्षगमनभूमि, इहापि
सूत्रबद्ध येन तपसा यावन्मुनिपरिवृता शिव गतास्तत्पि प्रकटी-
करिष्यति २१, 'च' प्राग्वत्, इत्येकविंशतिस्थानानि क्रमेण
परिपाट्या 'साहिमो' कथयिष्याम इति गाथाद्वयार्थ ॥ १ । २ ॥

साम्प्रत 'यथोद्देश निर्देश' इति न्यायात् 'चवणविमाण' त्ति प्रथम स्थानमाह—

सव्वट्ठ १ विजय २ उवरिम-
हिट्ठिमगेविज्ज ३ दो जयत्त ४ । ५ तु ।
उवरिमउवरिमगेविज्ज ६
मज्झिमोवरिमगेविज्जे ७ ॥ ३ ॥

तह वेजयन्त ८ आणय ९
पाणयकप्प १० च अच्चुय ११ चेव ।
पाणय १२ सहसार १३ पा-
णय च १४ विजय १५ च सव्वट्ठ १६ ॥४॥

दो सव्वट्ठ १७ । १८ जयन्त १९
अवराइय २० पाणय २१ तहा कप्पं ।
अवराइय २२ दो पाणय २३ । २४
पुव्वविमाणा जिणिन्दाण ॥ ५ ॥

व्याख्या—'सव्वट्ठ' इत्यादि, तत्र भगवत आदितीर्थंकरस्य सर्वार्थसिद्धि च्यवनविमानम् १, अजितस्य विजय—प्रथममनुत्तर-विमानम् २, सम्भवनाथस्योपरितनग्रैवेयकत्रिकस्याऽधस्तन प्रथमम् ३,

'दो जयत' ति अभिनन्दनसुमतिनाथयोर्जयन्ताख्यं तृतीयमनुत्तरविमानम् ४।५, 'तु' र्थ्यशब्दितत्रमे,पद्मप्रभस्योपरितनमैरेयकत्रिस्योपरितन विमानम्६,सुपार्श्वस्य मध्यमग्रैवेयकत्रिकस्योपरितन विमानम् ७, तथा चन्द्रप्रभस्य वैजयन्ताभिधानं द्वितीयमनुत्तरविमानम् ८, सुविधिस्वामिन आनतकल्प नवमो देवलोक ९, श्रीशीतलनाथस्य प्राणतकल्प दशमो देवलोक १०,'च' पुनरर्थे, श्रेयासस्याऽच्युताख्यो द्वादशो देवलोक ११, चैत्रतिपूर्णे, वासुपूज्यस्य प्राणतकल्प १२, विमलजिनस्य सहस्रारकल्पमष्टम स्वर्ग १३, अनन्तनाथस्य प्राणतकल्प १४, चशब्द भिन्नक्रम, धर्मजिनस्य विजयविमानम् १५, च प्राग्वत्, शान्ते सर्वार्थसिद्धि १६, 'दो सव्वट्ठ' त्ति, द्वयो कुन्थुनाथाऽरनाथयो सर्वार्थसिद्धि १७।१८, मल्लेर्जयन्त विमान १९,मुनिसुव्रतस्याऽपराजिताख्य चतुर्थमनुत्तरविमानम् २०, नमिनाथस्य प्राणतकल्पम् २१, तथा अरिष्टनेमरपराजितविमानम् २२, 'दो पाणय' त्ति, द्वयो पार्श्वनाथवर्द्धमानजिनयो प्राणतकल्प २३।२४ मिति गाथात्रयार्थ ॥ ३ । ४ । ५ ॥

इदानी 'नयरी' ति द्वितीयस्थानप्रतिपिपादयिषयाऽऽह—

नयरी विणीय १ उज्झा २

सावत्थी ३ विणीय ४ कोसलपुर ५ च ।

कोसंबी ६ वाणारसी ७
चंदपुरी ८ तह य काकंदी ९
भद्दिलपुर १० सीहपुर ११
चंपा १२ कंपिल्लपुर १३ [illegible]
रयणउर १५ हत्थिणाउर १६
गयउर १७ तह चेव नाग [illegible]
मिहिला १९ रायगिहं २० चिय
मिहिलानयरी २१ य [illegible]
वाराणसी २३ य तह कुंड
गाम २४ जिणजम्मनयरीओ ॥३८

व्याख्या—विनीता १, अयोध्या [illegible]
४, कौशाम्बपुर ५, कोशाम्बी [illegible]
काकन्दी ९, भद्दिलपुर १०, सिंहपुर ११, [illegible]
रत्नपुर १३, अयोध्या १४, [illegible]
हस्तिनागपुरमेव १७, नागपुर—तेन [illegible]
गृहनगर २०, मिथिला २१, [illegible]
कुंडग्राम २४ चेति रूपमाभिर्द्वयम् [illegible]
कृता जन्मनगर्यः क्रमेण प्रतिपत्तव्या [illegible] ॥३७-३८

इदानीं 'जणया' ति तृतीयस्थानमभिधित्सुराह—

नाभी १ जियसत्तु २ जिया-
रि ३ संवरो ४ मेह ५ धर ६ पइट्ठे ७ य ।
महसेण ८ सुग्गीव ९ दढरह १०
विण्हू ११ वसुपुज्ज १२ कयवम्मे १३ ॥ ९ ॥
सिंह १४ भाणु १५ विस्ससेणे १६
सूर १७ सुदंसण १८ कुंभ १९ सुहमित्तो २० ।
विजओ २१ समुद्दविजया २२-
ससेण २३ सिद्धत्थ २४ जिणपियरो ॥ १० ॥

व्याख्या—आदितीर्थकृत ऋषभस्वामिनः पिता नाभिराजा १, एवं क्रमेण शेषाणां जितशत्रु २, जितारि ३, संवर ४, मेघ ५, धर ६, प्रतिष्ठ ७, महासेन ८, सुग्रीव ९, दृढरथ १०, विष्णु ११, वसुपूज्य १२, कृतवर्मा १३, सिंह १४, भानु १५, विश्वसेन १६, शूर १७, सुदर्शन १८, कुम्भ १९, सुमित्र २०, विजय २१, समुद्रविजय २२, अश्वसेन २३, सिद्धार्थ २४, नृपतिशब्दः सर्वत्र प्रयोज्यः । इत्येते जिनानां पितरो जनका विज्ञेया इति गाथाद्वयार्थः ॥९।१०॥

इदानीं 'जणणी' ति चतुर्थस्थानमभिधातुकाम आह—

मरुदेवी १ विजयदेवी २
सेणा ३ सिद्धत्थ ४ मंगल ५ सुसीमा ६ ।
पुहवी ७ लक्खण ८ रामा ९
नंदा १० विण्हू ११ जया १२ सामा १३॥११॥

सुजसा १४ सुव्वय १५ अइरा १६
सिरिया १७ देवी १८ पभावई १९ पउमा २०।
वप्पा २१ सिवा २२ य वम्मा २३
तिसलादेवी य २४ जिणमाया ॥ १२ ॥

व्याख्या—भगवत ऋषभप्रभोर्माता मरुदेवी १, एवमजिता-दीनामनुक्रमेण क्रमेण विजया २, सेना ३, सिद्धार्था ४, मङ्गला ५, सुसीमा ६, पृथिवी ७, लक्ष्मणा ८, रामा ९, नन्दा १०, विष्णु ११, जया १२, श्यामा १३, सुयशा १४, सुव्रता १५, अचिरा १६, श्री १७, देवी १८, प्रभावती १९, पद्मावती २०, वप्रा २१, शिवा २२, वामा २३, त्रिशलादेवी २४, चेत्येता मातरोऽवगन्तव्या इति गाथाद्वयार्थः ॥ ११ । १२॥

इदानीं ' रिक्ख ' त्ति पद्यमस्थाननिरूपणायाऽऽह्—

उत्तरसाढा १ रोहिणी २
मियसीस ३ पुणवसू ४ महा ५ चित्ता ६ ।
वैसाह ७ णुराह ८ मूल ९
पुव्व १० सवणो ११ सयभिसा १२ य ॥१३॥
उत्तरभद्द १३ रेवई १४
पुस्स १५ भरणी १६ कत्तिया १७ रेवई १८ य।
अस्सिणि १९ सवणो २० अस्सिणि २१
चित्त २२ विसाहा २३ य उत्तरा २४ रिक्खा ॥१४॥

व्याख्या—प्रथमजिनेशितुर्नाभेयस्य जन्मनक्षत्रमुत्तराषाढा १, एवमजितादीना क्रमेण रोहिणी २, मृगशीर्ष ३, पुनर्वसू ४, मघा ५, चित्रा ६, विशाखा ७, अनुराधा ८, मूल ९, पूर्वाशब्देन पूर्वाषाढैवात्र ज्ञेया, अग्रेतनप्रकरणे शीतलस्वामिनो धनूराशेर्वक्ष्यमाणत्वात् १०, श्रवण ११, शतभिषक् १२, उत्तराभाद्रपदा १३, रेवती १४, पुष्य १५, भरणी १६, कृत्तिका १७, रेवती १८, अश्विनी १९, श्रवण २०, अश्विनी २१, चित्रा २२, विशाखा २३, उत्तराफाल्गुनी २४, चेतिजन्मनक्षत्राणि ज्ञेयानीति गाथाद्वयार्थ ॥ १३ । १४

इदानीं ' रासि ' त्ति पदव्याख्यानव्याचिख्यासयाऽऽह—

धणुगो १ विसो २ दु ३। ४ मिहुणो
सीहो ५ कन्ना ६ तुला ७ अली ८ चेव।
दो धणु ९। १० मयरो ११ कुंभो १२
दो मीणा १३।१४ कक्को १५ मेसो १६॥१५॥
विस १७ मीण १८ मेस १९ मयरो २०
मेसो २१ कन्ना २२ मुणो तुला २३ कन्ना २४।
उसभाईण जिणाण पयाओ इति रासीओ ॥ १६ ॥

व्याख्या—' धणुगो ' इत्यादि, ऋषभादीनां जिनानामिमे वक्ष्यमाणा राशयो ज्ञेया स्तत्राहि भगवन ऋषभस्वामिनो राशिर्धनु १, अजितस्य वृष २, द्वयो सम्भवाऽभिनन्दनयोर्मिथुनम् ३।४। सुमत सिंह ५, पद्मप्रभस्य कन्या ६, सुपार्श्वस्य तुला ७, चन्द्रप्रभस्य वृश्चिक ८, ततो द्वयो सुविधिशीतलजिनयोर्धनु ९।१०, श्रेयांसस्य मकर ११, वासुपूज्यस्य कुम्भ १२, द्वयोर्विमलाऽनन्तजिनोर्मीनराशि १३।१४। धर्मजिनस्य कर्क १५, शान्तेर्मेष १६, कुन्थुजिनस्य वृष १७, अरजिनस्य मीन १८, मल्लिस्वामिनो मेष १९, मुनिसुव्रतस्य मकर २०, नमिजिनस्य मेष-

२१, अरिष्टनेमिन कन्या २२, पार्श्वप्रभोस्तुला २३, श्रमणस्य भगवतो महावीरस्य कन्याराशि २४ रिति क्रमेण नाभेयादिजिनाना राशयो बोद्धव्या इति गाथाद्वयार्थ ॥ १५ । १६ ॥

इदानीं ' लक्षण 'त्ति सप्तम स्थान प्रतिपिपादयिषुराह—

वसह १ गय २ तुरय ३ वानर ४
कुचू ५ कमल ६ च सत्यिओ ७ चदो ८ ।
मयर ९ सिरिवच्छ १० गडय ११
महिस १२ वराहो १३ य सेणो १४ य ॥१७॥
वज्ज १५ हरिणो १६ छगलो १७
नंदावत्तो १८ य कलस १९ कुम्मो २० य ।
नीलुप्पल २१ सख २२ फणी २३
सीहो २४ य जिणाण चिंधाइ ॥ १८ ॥

व्याख्या—' वसह ' इत्यादि, वृषभ १, गज २, तुरग-अश्व ३, वानर कपि ४, क्रौञ्च –पक्षिविशेष ५, कमल-रक्तपद्म ६, स्वस्तिक ७, चन्द्र ८, मकर -मत्स्यविशेष ९, श्रीवत्स-उत्तमपुरुषाऽऽकार १०, गडक -खड्गि ११, महिष १२, वराह -शूकर १३, श्येन –पक्षिविशेष १४, वज्र-इन्द्रायुधम्

१५, हरिण १६, छगल-अज १७, नन्दावर्त्त-स्वस्तिकविशेष १८, कलश १९, कुर्म-कच्छप २०, नीलोत्पल २१, शङ्ख २२, फणी २३, सिंह २४, चेति जिनानां नामेयादीनां चिन्हानि-लाञ्छनानि विज्ञेयानीति गाथाद्वयार्थः ॥ १७ । १८ ॥

इदानीं ' पमाण 'त्ति अष्टमस्थानाऽमिधित्सयाऽऽह—

पचधणूसय पढमो कमेण पचासहीण जा सुविही ।
दसहीण जा अणतो पचूणा जाव जिणनेमी ॥ १९ ॥
नवहत्थपमाणो पाससामिओ सत्तहत्थ जिणवीरो ।
उस्सेहअगुलेण सरीरमाण जिणवराण ॥ २० ॥

व्याख्या—'पच' इत्यादि, तत्र प्रथमो जिन—ऋषभस्वामी पञ्चधनुःशतोच्छ्रय १, ततोऽजितादयो जिना क्रमेण परिपाट्या धनुषां पञ्चाशता हीना यावत् नवम सुविधिजिन, कोऽर्थ ? पञ्चभ्यो धनुःशतेभ्य पञ्चाशत् पञ्चाशत् पात्यन्ते, ततोऽजित सार्द्धचतुर्धनुःशतोच्च २, चतुर्धनुःशतोच्चाङ्ग सम्भव ३, धनु-सार्द्धत्रिशतोच्चोऽभिनन्दनजिन ४, धनुःशतत्रयोत्तुङ्ग सुमति ५, सार्द्धचापद्विशतीच्च पद्मप्रभ ६, धनुःशतद्वयोत्तुङ्ग सुपार्श्व ७, सार्द्धधनुःशतोच्छ्रयश्चन्द्रप्रभ ८, धनुःशतोन्नत सुविधि ९,

' दसहीण जा अणतो ' त्ति, सुविधेरनन्तरं यावदनन्तजिनस्तावत् तीर्थकृत्तनुमानविषये क्रमेण दशभिर्दशभिर्धनुर्भिर्हीना वक्तव्या, ततोऽयमभिप्रायः, सुविधिजिनतनुमानात् धनुःशतलक्षणात् दश स्वपनीयेषु नवतिचापोच्च शीतल १०, अशीतिरत्निकोदण्डकाय श्रेयांस ११, सप्ततिचापोच्चाङ्गयष्टिर्वासुपूज्य १२, षष्टिचापोन्नतो विमलजिन १३, पञ्चाशद्धनुरुन्नतोऽनन्तजित् १४, ' पचूणा जाव जिणनेमी' त्ति, अनन्तजिनादनन्तरं तीर्थकृतः क्रमेण पञ्चभि पञ्चभिर्धनुर्भिर्न्यूनास्तावत् वक्तव्या यावन्नेमिजिन, किमुक्तं भवति ?, अनन्तजिनतनुमानात् पञ्चाशद्धनुःस्वरूपात् पञ्चसूनृतेषु पञ्चचत्वारिंशच्चापोन्नतो धर्मजिन १५, चत्वारिंशच्चापोन्नत शान्ति १६, पञ्चत्रिंशद्धनुर्मित कुन्थु १७, त्रिंशच्चापोन्नतोऽरनाथ १८, पञ्चविंशतिचापोच्चो मल्लिस्वामी १९, विंशतिधनुरुन्नतो मुनिसुव्रत २०, पञ्चदशधनुस्तुङ्गो नमिनाथ २१, दशधनुस्तुङ्गोऽरिष्टनेमि २२, नवहस्तोन्नतः पार्श्वनाथ २३, सप्तहस्तोच्छ्रय श्रीवर्द्धमानजिन २४, इत्येवमुत्सेधाङ्गुलेन-' परमाणू रहरेणु तसरेणु ' इत्यादिक्रमनिष्पन्नेन शरीरमानमिदं जिनवराणां विज्ञेयमिति गाथाद्वयार्थः ॥ १९ । २० ॥

इदानीं ' आऊ ' त्ति नवमं स्थानमधिकृत्याऽऽह—

चुलसीई १ बावत्तरि २
  सट्ठी ३ पन्नास ४ तह य चालीसा ५ ।
तीसा ६ वीसा ७ दस ८ दो ९
  एग १० चिय पुव्वलक्खाइं ॥ २१ ॥
चुलसीइ ११ बावत्तरि १२
  सट्ठि१३तीस१४दस१५एग१६वरिसलक्खाइं ।
पणनवइ १७ चउरासी १८
  पणपैण्णा १९तीस २० दस २१ एग २२॥२२॥
एए वरिससहस्सा
  सय च वरिमाण पासमामिस्स २३ ।
बावत्तरि वरिसाइ २४ आऊ सिरिवद्धमाणस्स ॥२३॥

व्याख्या—'चुलसी' इत्यादि, तत्र प्रथमतीर्थकृतश्चतुरशीति पूर्वलक्षाणि सर्वायु १, द्वासप्तति पूर्वलक्षाण्यजितस्य २, सम्भवप्रभोः षष्टिपूर्वलक्षा ३, अभिनन्दनस्य पूर्वाणां पञ्चाशल्लक्षा ४, सुमतेश्च-त्वारिंशल्लक्षा पूर्वाणाम् ५, पद्मप्रभप्रभो पूर्वाणां त्रिंशल्लक्षा ६, सुपार्श्वस्य विंशतिर्लक्षा पूर्वाणाम् ७, चन्द्रप्रभस्य पूर्वाणां दशलक्षा ८, सुविधिस्वामिन पूर्वलक्षे द्वे ९, शीतलप्रभो पूर्वाणां लक्षमेक १०, श्रेयांसस्य चतुरशीतिर्वर्षलक्षाणि ११, द्वासप्ततिर्वर्षलक्षा वासु-

पुन्यस्य १२, षष्टिर्वर्षलक्षाणि विमलस्य १३, अनन्तजितस्त्रिंशद्वर्षलक्षाणि १४, धर्मजिनस्य वर्षाणां दशैव लक्षाणि १५, शान्तेर्वर्षलक्षमेकं १६, कुन्थुनाथस्य पञ्चनवतिर्वर्षसहस्राणि १७, चतुरशीतिर्वर्षसहस्राण्यरस्य १८, मल्ले पञ्चपञ्चाशद्वर्षसहस्राणि १९, त्रिंशद्वर्षसहस्रा मुनिसुव्रतस्य २०, नमेर्दशैव वर्षसहस्राणि २१, अरिष्टनेमिनो वर्षसहस्रमेकं २२, वर्षशतं पार्श्वप्रभो २३, द्वासप्ततिर्वर्षाणि वर्द्धमानस्वामिन २४, इति गाथात्रयार्थः ॥ २१ । २२ । २३ ॥

इदानीं ' वण्ण ' त्ति दशमं स्थानमुपदर्शयन्नाह—

पच जिण कणयवन्ना ५
रत्तो ६ हेमप्पहो ७ य दो धवला ८ । ९ ।
दो १० । ११ चामीयरवण्णा
रत्तो १२ छच्चेव कणयाभा १८ ॥ २४ ॥
मरगयनीलो १९ अलिसा-
मलो २० य कंचणनिभो २१ य अलिसायो २२ ।
तह य तमालदलाभो २३
सुवण्णवण्णो य जिणवीरो २४ ॥ २५ ॥

व्याख्या—' पच ' इत्यादि, तत्राद्या ऋषभाऽजितसम्भ-

ऽभिनन्दनसुमतिनाथनामानः पञ्च जिना कनकसमानवर्णाः ५, तत पद्मप्रभो रक्तवर्णः ६, सुपार्श्वो हेमप्रभ—सुवर्णसवर्णवर्णः ७, द्वौ चन्द्रप्रभसुविधी जिनौ धवलौ—श्वेतवर्णौ ८–९, ततो द्वौ शीतलश्रेयांसौ चामीकरवर्णौ—स्वर्णाभौ १०–११, वासुपूज्यो रक्त १२, तत षट् विमलाऽनन्तधर्मशान्तिकुन्थ्वरनाथनामधेया कनकवर्णाः १८, मल्लिमरकततुल्यनीलवर्णः १९, अञ्जनसन्निभश्यामलो मुनिसुव्रत २०, नमिजिन काञ्चनसदृश २१, अरिष्टनेमिश्चाऽलिश्यामल २२, तथा पार्श्वनाथस्तमालश्याम—तमालवर्णो मरकतनीलवर्णः २३ च पुनरर्थे, वीरजिन सुवर्णवर्ण २४ इतिगाथाद्वयार्थः ॥२४।२५॥

इदानीं ' अन्तर ' त्ति एकादशं स्थानं व्याचिख्यासुराह—

अयराणि कोडिलक्खा
पन्नास १ तीस २ दस ३ य नव ४ चेव ।
कोडिसहस्सा नवई ५
नव य सहस्सा ६ नवसयाइं ७ ॥ २६ ॥

नवई पुण कोडीओ ८
नव कोडी ९ कोडिसागरसऊणा ।
छावट्ठीलक्खेहिं छव्वीससहस्सवरिसेहिं १० ॥ २७ ॥

चउपन्न सागरेहिं ११
तीस १२ नव १३ चारि १४ तिन्नि ऊणाहिं ।
पलियतिचउभागेहिं १५
पलियद्ध १६ पलियचउभागे १७ ॥ २८ ॥

कोडिसहस्सूणा सा
वरिसाण त च अतरपरस्स १८ ।
चउपन्न वरिसलक्खा १९
छ २० प्पच २१ य वरिसलक्खाइ ॥ २९ ॥

तेसीइ च सहस्सा सच सयाई च वरिसपन्नास ।
नेमिस्सतरमेय २२ पासस्सड्ढाइयसयाऽ२३ ॥ ३० ॥

व्याख्या—'अयराणि' त्ति, तत्र ऋषभजिनमोक्षात् सागराणा पञ्चाशत्कोटिलक्षेषु गतेषु अजितस्वामिनो मोक्ष १, ततस्त्रिंशत्कोटिलक्षेषु सागराणा गतेषु सम्भवजिनस्य निर्वाणम् २, तदनन्तर सागराणा दशसु कोटिलक्षेषु व्यतीतेषु अभिनन्दनजिननिर्वाणम् ३, तदनन्तर सागराणा नवकोटिलक्षेषु गलितेषु सुमतिस्वामिनिर्वाणम् ४, तदनन्तर सागरोपमकोटीना नवतिसहस्रेषु व्यपगतेषु श्रीपद्मप्रभनिर्वाणम् ५, तदनन्तर नवसु सहस्रेषु सागरो-

पमकोटीना यातेषु श्रीसुपार्श्वजिननिर्वाणम् ६, तदनन्तर नवसु सागरोपमकोटीशतेषु समतीतेषु चन्द्रप्रभनिर्वाणम् ७, तदनन्तर नवतौ सागरोपमकोटीना गताया सुविधिस्वामिनिर्वाणम् ८, तदनन्तर नवसु सागरोपमकोटीष्वतीतासु श्रीशीतलजिननिर्वाणम् ९, तत सागरोपमैकेशतषट्षष्टिलक्षषड्विंशतिसहस्रोनाया सागरोपमकोटाकोट्या गताया श्रीश्रेयासनिश्रेयस १०, ततश्चतुष्पंचाशति सागरेषु यातेषु श्रीवासुपूज्यजिनमोक्ष ११, ततस्त्रिंशत्सु अन्त्येषु सागरेषु व्यतीतेषु श्रीविमलजिननिर्वाणम १२, तदनन्तर नवसु सागरेषु समतीतेष्वनन्तस्तितो मोक्ष १३, तदनन्तर चतुर्षु सागरेषु व्यतिगतेषु श्रीधर्मजिननिर्वाणम् १४, तदनन्तर चतुर्भागीकृतस्य पल्यस्य त्रिभिर्भागैर्न्यूनेषु त्रिषु सागरेषु गतेषु श्रीशान्तिजिननिर्वाणम् १५, तदनन्तर पल्योपमार्द्धेन कुन्थुनाथमोक्ष १६, तत कोटिसहस्रवर्षन्यूने एकस्मिन् पल्योपमचतुर्भागे गतेऽरजिननिर्वाणम् १७, तदनन्तर वर्षकोटिसहस्रेऽतिक्रान्ते मल्लिस्वामिमोक्ष १८, तदनन्तर वर्षाणा चतुःपञ्चाशति लक्षेषु गतेषु श्रीमुनिसुव्रतनिर्वाणम् १९, तदनन्तर वर्षाणा षट्सु लक्षेषु गतेषु श्रीनमिनाथनिर्वाणम् २०, तदनन्तर पञ्चसु वर्षलक्षेषु व्यतिक्रान्तेषु श्रीनेमिनाथनिर्वाणम् २१, तदनन्तर सार्द्धसप्तशते समधिकेषु

त्र्यशीतिवर्षसहस्रेषु समतीतेषु पार्श्वप्रभुनिर्वाणम् २९, तदनन्तरं सार्द्धे वर्षशतद्वये गते सति श्रीवर्द्धमानस्वामिन परमानन्दपदप्राप्तिरितिगाथापञ्चकार्थ ॥ २६ । २७ । २८ । २९ । ३०॥

अथाऽऽद्यन्तजिनयो ऋषभवीरस्वामिनोरन्तरकालमाह—

उसभजिणाओ वीरो जाओ अयराण कोडिकोडीए ।
बायालीससहस्सेहिं नवर परिमाण ऊणाए ॥ ३१ ॥

व्याख्या—'उसभ'त्ति, ऋषभजिनात् द्विचत्वारिंशद्वर्षसहस्रै रूनया सागरोपमकोटाकोट्या गतया वीरधर्मतीर्थपतिर्जात सिद्ध इति गाथार्थ । 'उसभजिणाओ'इत्यत्र पञ्चमी मर्यादायां, ततो धातूनाम नेकार्थत्वात् जात सिद्ध इत्यर्थ कार्यो नतु समुत्पन्न इति, यदाह प्रव चनसारोद्धारवृहद्वृत्तिकार "उसभसामिणो" इत्यादिवत्पञ्चपदौ प ञ्चमी, अवधिश्च द्वेधा, अभिविधिर्मर्यादा च, तत्र यद्यभिविधौ पञ्चमीति कृत्वा समुत्पन्नो जात इति व्याख्यायते तदा ऋषभस्वाम्यादिजन्मका लात् यथोक्तजिनादिजन्मकालमान स्यात्, तनश्च ऋषभस्वामिन सर्वायु कालमानेनाऽधिकेषु दु पमसुषमारकस्यैकोननवतिपक्षेष्ववशि ष्यमाणेषु श्रीमहावीरस्वामिन सिद्धि प्रसज्येत, आगमे तु अन्यू नाधिकेष्वेकोननवतिपक्षेष्ववशेषेषु श्रीमहावीरसिद्धिरुक्तेत्यागमविरो-

यच्चैतेन नाऽत्राऽभिविधौ पञ्चमी, किन्तु मर्यादायामेव, तथाऽपि यदि समुत्पन्ना मौन इति व्याख्यायते तदा ऋषभस्वाम्यादिनिर्वाणकालात् यथोक्तमजितादिजिनान्तरकालमान स्यात्, ततश्च यथोक्तजिनान्तराणां कालमानैरेव चतुर्णामपि परिपूर्णं, श्रीमदजितजिनयोर्जिनान्तर मध्येपु राज्यमान तु जिनान्तरकालेऽसम्बद्धीतत्त्वात् तदतिक्रमप्रसङ्ग इत्योऽप्यनन्तौ मार्गिणा श्रीमन्महावीरसिद्धि प्रसङ्गेन, न चेष्टम्, तस्मात् ऋषभस्वाम्यादिनिर्वाणात् यथोक्तकालमान अतिक्रम्य समुत्पन्ना— सिद्धा इत्येव व्याख्यातव्य, नाऽन्यथेति ॥

साम्प्रत सप्तसु तीर्थव्युच्छित्ति व्याचिख्यासुराह—

पुरिमंतिमअट्ठट्ठंतरेसु तित्थस्स नत्थि वुच्छेओ ।
मज्झिल्लएसु सत्तसु एत्तियकालं तु वुच्छेओ ॥ ४२ ॥

चउभागो १ चउभागा २
तिन्नि य चउभाग ३ पलियचउभागो ४ ।
तिन्नेव य चउभागा ५
चउत्थभागो ६ य चउभागो ७ ॥ ४३ ॥

व्याख्या—'पुरि' इत्यादि, इह हि चतुर्विंशतेस्तीर्थकृता

मरणकृत् ' मिति ने इभ पलिए ' इति, गनमेकादशमन्तारम्यानम्
॥ ३२ । ३३ ॥

इदानीं ' निक्ख 'त्ति द्वादश स्यान व्याख्यानयन्नाह—

वसुपुज्ज मल्लि नेमी पासो वीरो कुमारपव्वइया ।
रज्ज काउ सेसा मल्ली नेमी अपरिणीया ॥ ३४ ॥

व्याख्या—' वसु ' इत्यादि, वासुपूज्यो मल्लिस्वामी नेमि
जिन पार्श्वो वीरश्चैते पञ्च कुमारा अकृतराज्यभारा प्रव्रजिता-दीक्षा
गृहीतवन्त , शेषा एकोनविंशतिनाभेयाद्या राज्य परिपाल्य प्रव्रेजु ,
तथा मल्लिनेमी चैतौ द्वौ अपरिणीतौ—अविवाहितौ प्रव्रजितौ, अन्ये
द्वाविंशतिर्जिना कृतपाणिग्रहणा प्राव्राजिषुरिति गाथार्थ ॥३४॥

साम्प्रत ये यावता परिवारेण प्रव्रजितास्तान्दर्शयन्नाह—

चउसहस्सजुओ उसहो
एगो वीरो सहस्ससजुआ सेसा ।
मल्ली पासो तिर्हि तिरि
सएहि छहि वासुपुज्जजिणो ॥ ३५ ॥

व्याख्या—' चउ ' इत्यादि, ऋषभ प्रथमजिनैश्चतुर्भि

पुष्पसहस्रेः सह व्रतं जग्राह, वीरो वर्द्धमानजिन एकः—न केनाऽपि सह प्राव्राजीदित्यर्थः, पार्श्वनाथो मल्लिश्च त्रिभिस्त्रिभिः शतैः व्रतम् गृहीत, अत्र च मल्लिस्वामी स्त्रीणा पुरुषाणा च प्रत्येकं त्रिभिस्त्रिभिः शतैः सह प्रव्रजितः, ततो मिलितानि षट् शतानि भवन्ति, यत्तु सूत्रे त्रिभिः शतैरित्युक्तं तत्र केवला स्त्रियः पुरुषा वा गृहीता द्वितीयः पक्षः पुनः सन्नपि न विवक्षित इति सम्प्रदायः, स्थानाङ्गटीकायामप्युक्तं 'मल्लिजिनः स्त्रीशतैरपि त्रिभिः' रिति, तथा वासुपूज्यो जिनः षड्भिः पुरुषशतैः सह व्रतं प्रपन्नः, शेषास्तु ऋषभवीरमल्लिपार्श्ववासुपूज्यव्यतिरिक्ता अजिताद्या एकोनविंशतिर्जिना सैहस्रसयुता एकपुरुषसहस्रसहिता प्राव्राजिषुरिति गाथार्थः ॥२९॥

साम्प्रत ये यत्र स्थाने प्रव्रजितास्तान् प्रतिपादयन्नाह—

उसहो विणीयनयरीं बारवईए य नेमिजिणचंदो ।
सेसा पुण तित्थयरा पव्वइया जम्मभूमीसु ॥ ३१ ॥

व्याख्या—ऋषभः—प्रथमजिनः विनीतानगर्यां, अरिष्टनेमि जिनचन्द्रश्च द्वारावत्यां प्रव्रजितः, शेषाः पुनरजिताद्यो द्वाविंशतिस्तीर्थंकरा स्वस्वजन्मभूमीषु व्रत जगृहुरिति गाथार्थः, गत द्वारं दीक्षास्थानम् ॥ ३१ ॥

इदानीं 'तव' त्ति त्रयोदश स्थान व्याख्यानुक्रम आह—

वसुपुज्जो चउत्थेण अट्ठमभत्तेण मल्लिपासा य ।
सेसजिणा छट्ठेण सुमइजिणो निच्चभत्तेण ॥ ३७ ॥

व्याख्या—वासुपूज्यश्चतुर्थेनैकोपवासेन, मल्लि पार्श्वयाऽष्टम-भक्तेन निष्क्रिमवासे, सुमतिजिनो नित्यभक्तेन—अनवरतभक्तेन तपसा-प्राजित, शेषा पुन ऋषभस्वामिप्रभृतयो विंशति तीर्थकरा षष्ठन द्वाभ्यामुपवासाभ्यामिति गाथार्थ ॥ ३७ ॥

इदानीं 'भिक्ख' त्ति चतुर्दश स्थान प्रचिकटयिषुराह—

सवच्छरेण उसभस्स पारण सेसयाण बीयदिणे ।
परमन्न तेरीस इक्खुरसो पढमपारणए ॥ ३८ ॥

व्याख्या -ऋषभस्य प्रथमतीर्थकृत सवत्सरेण—वर्षेण, शेषाणा-मजितादीना जिनाना व्रतग्रहणदिनाद् द्वितीये दिवसे पारण-कमभूत् । तत्राऽपि अजितप्रभृतित्रयोविंशतितीर्थकृता प्रथमपारणके परमान्न पायसलक्षणमासीत् ऋषभजिनेशितु प्रथमपारणके इक्षुरस समायामीनिति गाथार्थ ॥ ३८ ॥

साम्प्रत यैस्तीर्थकृता पारणकानि कारितानि तेषा नामान्याह—

सिज्जस १ बंभदत्ते २
सुरिंददत्ते ३ य इददत्ते ४ य।
पउमे य ५ सोमदेव ६
माहिंद ७ तह सोमदत्ते ८ य ॥ ३९ ॥

पुस्से ९ पुणव्वसु १० पुण
नंद ११ सुनंदे १२ जए १३ य विजए १४ य।
तत्तो य धम्मसीहे १५
सुमित्त १६तह वग्गसीहे १७ य ॥ ४० ॥

अवराइय १८ विस्ससेणे १९
वीसइमे होइ बंभदत्ते २० य।
दिन्ने २१ वरदिन्न २२ पुण
धन्ने २३ बहुले २४ य बोधव्वे ॥ ४१ ॥

व्याख्या-'सिज्जंस' इत्यादि, तत्र ऋषभस्य पारणाकारक श्रेयांसकुमार १, एवं क्रमेणाऽजितादिजिनानां-ब्रह्मदत्त २, सुरेन्द्रदत्त ३, इन्द्रदत्त ४, पद्म ५, सोमदेव ६, महेन्द्र ७, सोमदत्त ८, पुष्य ९, पुनर्वसु १०, पुन नन्द ११, सुनन्द १२, जय १३, विजय १४, ततो धर्मसिंह १५,

सुमित्र १६, तथा व्याघ्रसिंहश्च १७, अपराजित १८, विश्वसेन १९, विंशतितमो ब्रह्मदत्त २०, दिन्न २१, वरदिन्न २२, पुनर्वसु २३, बहुलतापसश्चेति पारणककारका बोद्धव्या इतिगाथात्रयार्थ ॥ ३९ । ४० । ४१ ॥

इदानीं ' नाणठाण ' ति पञ्चदशस्थानमभिधित्सुराह—

उसभस्स पुरिमताले वीरस्सुज्जुवालियानईतीरे ।
पवज्जाठाणेसु सेसाण जिणाण नाणाइं ॥ ४२ ॥

व्याख्या—ऋषभस्य प्रथमजिनस्य विनीतानगर्या उद्यान स्थाने पुरिमतालनगरे केवलज्ञानमुत्पन्न, वीरस्य चरमतीर्थपतेर्जृम्भिकाग्रामाद्बहि ऋजुवालुकानद्यास्तीरे, शेषाणां द्वाविंशतेर्जिनाना प्रव्रज्यास्थानेष्वभवति गाथार्थ ॥ ४२ ॥

साम्प्रत यस्य प्रमोयेन तपसा केवलज्ञानमुत्पन्नं तत्प्रतिपादयन्नाह—

अट्ठमभत्तंतसाणे पासोसहमल्लिरिट्ठनेमीण
वसुपुज्ज चउत्थेण सेसाण छट्ठभत्तेण ॥ ४३ ॥

व्याख्या—श्रीपार्श्वजिनऋषभस्वामिमल्लिनाथाऽरिष्टनेमीनामष्टमभक्तान्ते—उपवासत्रितयान्ते केवलज्ञानमुत्पेदे, वासुपूज्यस्य चतु-

येन-एकोपवासेन, शेषाणामजितजिनप्रभृतीनामेकोनविंशतेस्तीर्थकृतां तु षष्ठभक्तेन द्वाभ्यामुपवासाभ्यामितिगाथार्थः ॥ ४३ ॥

अथ तीर्थकृतां चैत्यवृक्षनामान्याह—

नग्गोह १ सत्तवण्णे २
साले ३ पियए ४ पियंगु ५ छत्ताभे ६ ।
सिरिसे ७ य नागरुक्खे ८
मल्ली ९ य पियंगुरुक्खे १० य ॥ ४४ ॥

तिंदुग ११ पाडल १२ जंबू १३
आसत्थे १४ खलु तहेव दहिवण्णे १५ ।
नंदीरुक्खे १६ तिलए १७
अंबगरुक्खे १८ असोए १९ य ॥ ४५ ॥

चंपग २० बउले २१ य तहा
वेडसरुक्खे २२ तहेव धवरुक्खे २३
साले २४ चउवीसइमे
चेइयरुक्खा जिणवराणं ॥ ४६ ॥

---

१ यस्य जिना पादपस्याधस्य सत्कवल्कज्ञानमवाप्नुवन्ति ।
अवनीरुहोऽपि स चैत्यनाम्ना प्रसिद्धो जिनशासनेऽत्र ॥

व्याख्या—' नग्गोह ' त्ति, [1]तत्र श्रीऋषभस्य चैत्यवृक्ष - ज्ञानोत्पत्तिर्न्यग्रोध १, एवमजितादिशेषजिनानां क्रमेण सप्तपर्ण २, शाल[3] ३, प्रियकं ४, प्रियगु ५, छत्राभ ६, सिरीष ७, नागवृक्ष ८, मल्लिका ९, प्रियगुं १०, तिन्दुक, ११ पाटल १२, जम्बू १३, अश्वत्य १४, दधिपर्ण १५, नन्दीवृक्ष १६, तिलक १७, चम्पकवृक्ष १८, अशोक १९, चम्पक २०, बकुल २१, वेतसवृक्ष २२, धववृक्ष २३, चतुर्विंश शाल २४, इत्येते चैत्यवृक्षा - केवलज्ञानोत्पत्तिस्थलोऽवगन्तव्या । इति गाथात्रयार्थं ॥ ४४ । ४५ । ४६ ॥

इदानीं ' गणहर ' त्ति षोडशस्थानव्याचिख्यासयाऽऽह—

चुलसाइ १ पचनवई २
विसुत्तर ३ सोलसुत्तरं ४ च सय ५ ।
सत्तुत्तर ६ पणनवई ७
तेणउई ८ अट्ठसीई ९ य ॥ ४७ ॥

इक्कासी १० बावत्तरी ११
छावट्ठी १२ सत्तवण्ण १३ पण्णा १४ य ।

---

१ प्रियाल इत्यन्ये, २ पिलङ्खुरिति केचित् ३ थाम्र इत्यपरे ।

तेयालीसा १५ य तहा
छत्तीसा १६ चेव पणतीसा १७ ॥ ४८ ॥
तित्तीस १८ अट्ठवीसा १९
अट्ठारस २० तहय चेव सत्तरस २१ ।
अट्ठारस २२ दस २३ इक्का-
रसेव २४ इय गणहरप्पमाण ॥ ४९ ॥

व्याख्या—' चुलसी ' इत्यादि, श्रीऋषभस्वामिन ऋषभसेनाद्याश्चतुरशीतिर्गणधराः १, श्रीअजितजिनस्य सिंहसेनप्रभृतय पञ्चनवति २, श्रीसम्भवस्य चारुमुख्या द्व्यधिक शतम् ३, श्रीअभिनन्दनस्य वज्रनाभाद्या षोडशोत्तर शतम् ४, श्रीसुमतिजिनस्य चमरादय शत ५ श्रीपद्मप्रभस्य सुव्रतादय सप्ताधिक शतम् ६, श्रीसुपार्श्वनाथस्य विदर्भाद्या पञ्चनवति ७, श्रीचन्द्रप्रभस्य दत्तादयस्त्रिनवति ८, श्रीसुविधिस्वामिनोऽष्टाशीतिर्वराहप्रभृतय ९, श्रीशीतलजिनस्यैकाशीतिरानन्दाद्या १०, गोशुभाद्या षट्सप्तति श्रेयासस्य ११, श्रीवासुपूज्यस्य षट्षष्टि सूक्ष्मप्रभृतय १२, श्रीविमलस्य सप्तपञ्चाशन्मन्दराद्या १३, यशोमुख्या पञ्चाशदनन्तस्य १४, श्रीधर्मनाथस्याऽरिष्टाद्याश्चित्वारिंशत् १५, श्रीशान्तिनाथस्य चक्रायुधादय षट्त्रिंशत् १६, श्रीकुन्थो स्वयम्भप्रमुखा पञ्चत्रिंशत्

१७, श्रीअरजिनस्य कुम्भप्रमुखास्त्रयस्त्रिंशत् १८,श्रीमल्लिस्वामिनो भिषक्प्रमुखायोऽष्टाविंशति १९, श्रीमुनिसुव्रतस्येन्द्रादयोऽष्टादश २०, श्रीनमे कुम्भाद्या सप्तदश २१, श्रीअरिष्टनेमिनो वरदत्ताद्या अष्टादश, एकादशेत्यन्ये २२, श्रीपार्श्वप्रभोरार्यदत्तादयो दश २३, श्रीवर्द्धमानजिनेशितुरिन्द्रभूतिप्रमुखा एकादश २४, एतत् ऋषभादीना चतुर्विंशतेस्तीर्थकृतां यथाक्रम गणधराणा-मूलसूत्र-कर्तॄणा प्रमाण विज्ञेयमिति गाथात्रयार्थ ॥ ४७ । ४८ । ४९ ॥

इदानीं 'मुणि' त्ति सप्तदश स्थान प्रचिकटयिषुराह—

चुलसीइ सहस्साइ १
इगछलक्ख२दुलक्ख३तिन्नि ४ लक्खाइ ।
वीसहिया ५ तीसहिया ६
तिन्नि ७ य अड्ढाइ ८ य दु ९ इक्क १०॥५०॥

चउरासीइ सहस्सा ११
बिसत्तरी १२ अट्ठसट्ठि १३ छावट्ठी १४ ।
चउसट्ठी १५ बासट्ठी १६
सट्ठी १७ पन्नास १८ चालीसा १९ ॥ ५१

तीसा २० वीसा २१ अट्ठा-
रसेव २२ सोलस २३ चउद्दस २४ कमेण ।
एय साहुपमाण इत्तो अज्जाण वुच्छामि ॥ ५२ ॥

व्याख्या—'चुलसीई' इत्यादि, तत्र श्रीऋषभस्वामिनश्चतुरशीति सहस्रा साधव १, अजितस्यैक लक्ष २, सम्भवस्य द्वे लक्षे ३, अभिनन्दनस्य त्रीणि लक्षाणि ४, सुमतिजिनस्य विंशत्या सहस्रैः समन्विता त्रिलक्षी ५, पद्मप्रभस्य त्रिंशत्सहस्रयुक्तानि त्रीणि लक्षाणि ६, सुपार्श्वस्य त्रीणि लक्षाणि ७, चन्द्रप्रभस्य सार्द्धे लक्षे द्वे ८, सुविधिस्वामिनो द्वे लक्षे ९, श्रीशीतलस्यैक लक्ष १०, श्रेयांसस्य चतुरशीति सहस्रा ११, श्रीवासुपूज्यस्य द्वासप्तति सहस्राणि १२, विमलस्याऽष्टषष्टिसहस्राणि १३, अनन्तस्य षट्षष्टि सहस्राणि १४, धर्मजिनस्य चतुःषष्टि सहस्राणि १५, श्रीशान्तिनाथस्य द्वाषष्टि सहस्राणि १६, कुन्थुजिनस्य षष्टिसहस्री १७, अरस्वामिन पञ्चाशत्सहस्राणि १८, मल्लिजिनस्य चत्वारिंशत्सहस्रा १९, मुनिसुव्रतस्य त्रिंशत्सहस्रा २०, नमेर्विंशतिसहस्राणि २१, अरिष्टनेमिनोऽष्टादशसहस्राणि २२, पार्श्वप्रभो षोडशसहस्राणि २३, श्रीवर्द्धमानस्वामिनश्चतुर्दशसहस्राणीति ऋषभादिवर्द्धमानान्तानां चतुर्विंशतेस्तीर्थकृतां क्रमेण साधुप्रमाण विनिर्दिष्ट, एतेषा

सर्वाग्रेणाऽष्टाशीतिरभाणि अष्टचत्वारिंशत्सहस्राधिकानि भवन्ति,
§उक्तं च— अट्ठावीसं लक्खा अडयालीसं च तह सहस्साइं।
सव्वेसिं पि जिणाणं जईण माणं विनिद्दिट्ठं॥

एतच्च श्रीमज्जिनेन्द्रकरकमलदीक्षितानामेवात्र पिण्डिताभा मुनीनां प्रमाणं, न पुनर्गणधरादिभिरपि दीक्षितानां, तथामतिबहुत्वात्, इतोऽनन्तरद्वारे आर्यिकाणां साध्वीनां सहस्रापरिमाणं वक्ष्यामि त्रयस्त्रिंशे इति गाथात्रयार्थः॥ ९०। ९१। ९२॥

इदानीं 'अज्जिय' त्ति अष्टात्रिंशत्तमद्वारं व्याचिख्यासयाऽऽह—

तिण्णेव १ तिण्णि तीसा २
छत्तीसा तिण्णि ३ छच्च तीसहिया ४।
पंच य तीसा ५ चउरो
वीसा ६ चउरो य तीसहिया ७॥ ९३॥
तिण्णि य लक्खासीया ८
वीसइ लक्खो ९ उउत्तरो लक्खो १०।
लक्खो तिण्णि सहस्सा ११
लक्खो १२ लक्खो य अट्ठसया १३॥ ९४॥

§ प्रवचनसारोद्धारसप्ततिशतस्थानप्रकरणटीकयोः श्रीसुमतिप्रभजिनयो·

बासट्ठी सहस्स १४ चउसयाइं १५
इगसट्ठी सहस्स उच्च सया १६ ।
सट्ठी छच्चेव सया १७
सट्ठी १८ पणपण्ण १९ पण्णासा २० ॥५५॥

इगुयाला २१ चालीसा २२
अट्ठत्तीसा २३ तहय छत्तिसा २४ ।
अज्जाण तु सहस्सा नायव्वा निउणबुद्धीए ॥ ५६ ॥

---

श्रमणसङ्ख्यामाश्रित्य विंशत्यधिकानि त्रीणि लक्षाणि ५, त्रिंशदधिकानि त्रीणि लक्षाणि ६ इति व्याख्यान दृश्यते परं तत्र सर्वेषां जिनानामष्टाविंशतिलक्षाणि अष्टचत्वारिंशत्सहस्राधिकानि ( २८४८००० ) इत्येतत्प्रमाणा मुनिसङ्ख्या न सङ्गतिमङ्गति कथं त्रिंशत्यधिकास्त्रिंशदधिकास्तिस्रो लक्षा इत्येव प्रतिपादने ४९५५० एतत्प्रमाणा मुनिसङ्ख्याया न्यूनत्वभवनात्, श्रीमलयगिरिसूरिवर्यैरावश्यकवृत्तौ '**चुलसीइं च सहस्सा १ पणं २ दुवे ३ य तिन्नि ४ लक्खाइं । तिन्नि य वीसहिआइं ५ तीसहिआइं तिन्नेव ६ ।**' इत्येतद्गाथाव्याख्यायां सुमतेरपि लक्षाणि विंशतिसहस्राणि ५ । पद्मप्रभस्य त्रीणि लक्षाणि त्रिंशत्सहस्राधिकानि इत्युक्तत्वात् क्षापुरुषचरित्रपद्मानन्दमहाकाव्यादिग्रन्थद्वयेऽपि प्रतिपादितत्वाच्च सुमतिपद्मप्रभयो मुनिसङ्ख्या विंशतिसहस्राधिकानि त्रिंशत्सहस्राधिकानि च त्रीणि लक्षाणीत्येष एव समीचीन पन्था प्रतिभाति तत्त्वं पुनस्तत्त्वविदो विदन्ति ॥

व्याख्या—' तिण्णेव ' त्ति, ऋषभप्रभोरार्यिकाणां लक्षत्रयमेव १, अजितस्य त्रीणि लक्षाणि त्रिंशत्सहस्राणि च २, सम्भवस्य तिस्रो लक्षाः षट्त्रिंशत्सहस्राः ३, अभिनन्दनस्य त्रिंशत्सहस्राधिका षट् लक्षा ४, सुमतेः पञ्च लक्षाणि त्रिंशत्सहस्राणि च ५, पद्मप्रभस्य चतस्रो लक्षा विंशतिसहस्राणि ६, सुपार्श्वस्य चतस्रो लक्षास्त्रिंशत्सहस्राधिका ७, चन्द्रप्रभस्य त्रीणि लक्षाण्यशीतिसहस्राणि च ८, सुविधिस्वामिनो लक्षमेकं विंशतिसहस्राधिकं ९, शीतलजिनस्य षडुत्तर—साध्वीषट्काऽधिक लक्षमेकं १०, श्रेयांसस्य लक्षमेकं त्रीणि सहस्राणि च ११, वासुपूज्यस्य लक्षमेकं १२, विमलस्यैकं लक्षमष्टशतानि च १३, अनन्तजिनो द्विषष्टिसहस्राणि १४, धर्मजिनस्य द्विषष्टिसहस्राणि चतुःशतानि १५, श्रीशान्तिजिनस्यैकषष्टिसहस्राणि षट् शतानि च १६, कुन्थोः षष्टिसहस्राणि षट् शतानि च १७, श्रीअरजिनस्य षष्टिसहस्राणि १८, श्रीमल्लिस्वामिनः पञ्चपञ्चाशत्सहस्राणि १९, मुनिसुव्रतस्य पञ्चाशत्सहस्राणि २०, नमेरेकचत्वारिंशत्सहस्राणि २१, अरिष्टनेमिनश्चत्वारिंशत्सह-

स्राणि २२, श्रीपार्श्वप्रभोरष्टात्रिंशत्सहस्राणि २३, श्रीवर्द्धमानस्वामिन षट्त्रिंशत्सहस्राणीति ऋषभप्रमुखाना तीर्थकृतामार्यिकाणां प्रमाण निपुणबुध्या ज्ञातव्यमिति, ९३।९४।९५।९६। गाथा चतुष्टयार्थः ॥ आसां सर्वसङ्ख्यामीलने चतुश्चत्वारिंशल्लक्षा षट्चत्वारिंशत्सहस्रेश्चतु शतैस्त्वधिका उपरि आर्यिकापञ्च चेति भवन्ति, तथा चोक्तम्—

" चोयालीस लक्खा छायालसहस्स चउसयसमग्गा ।
छच्चेव अज्जियाओ चउवीसाए जिणवराण ॥ १ ॥ "

इदानीं ' जक्ख ' त्ति एकोनविंशस्थानस्थायिचरीर्णुराह—

जक्खा गोमुह १ महजक्ख २
तिमुह ३ ईसर ४ तुंबुरू ५ कुसुमो ६ ।
मायंगो ७ विजया ८ जिय ९
बंभो १० मणुओ ११ सुरकुमारो १२ ॥९७॥
छम्मुह १३ पयाल १४ किन्नर १५
गरुडो १६ गंधव १७ तहय जक्खिंदो १८ ।
कूबर १९ वरुणो २० भिउडी २१
, गोमेहो २२ वामण २३ मयंगो २४ ॥९८॥

व्याख्या–'जक्खा' त्ति, 'यक्षा भक्तिदक्षास्तीर्थकृतामिमे, यथा ऋषभस्वामिनो गोमुखो यक्षः कनकद्युतिर्गजवाहनश्चतुर्भुजो वरदाक्ष-सूत्रान्वितदक्षिणपाणिद्वयो मातुलिङ्गपाशभूषितवामकरद्वयश्च १, अजितस्य महायक्षोऽभिधो यक्षः श्यामशरीरः करिवराश्चतुर्मुखोऽष्टबाहु र्वरदमुद्गराक्षसूत्राऽभयमुद्रान्वितवरचतुष्टयः पाशाऽक्षसूत्रमुद्गरव-दाऽङ्कितदक्षिणपाणिचतुष्टयश्च २, सम्भवजिनस्य त्रिमुखो नामा यक्षस्त्रि-मुखस्त्रिनेत्रः श्यामवर्णो मयूरवाहनः षड्भुजो नकुलगदाऽभयमण्डितद-क्षिणपाणित्रयो मातुलिङ्गनागाऽक्षसूत्रयुतवामभुजत्रयश्च ३, श्रीअभि-नन्दनस्येश्वराख्यो यक्षेश्वराभिधो वा यक्षः श्यामकान्तिर्गजवाहनश्चतु-र्भुजो मातुलिङ्गाऽक्षसूत्रयुक्तदक्षिणपाणिद्वयो नकुलाऽङ्कुशान्वितवाम-पाणियुगश्च ४, श्रीसुमतिजिनस्य तुम्बुरुर्यक्षस्तार्क्ष्यवाहनः सितद्युतिश्च-तुर्बाहुर्वरदशक्तियुक्तदक्षिणपाणिद्वयो गदापाशाभासितवामकरद्वयश्च ५, श्रीपद्मप्रभस्य कुसुमाख्यो यक्षो नीलद्युतिर्मृगवाहनश्चतुर्हस्त फलाऽभयप्रभाऽऽङ्कितदक्षिणपाणिद्वयो नकुलाऽक्षसूत्राऽऽश्रितवामक-रयुगश्च ६, श्रीसुपार्श्वजिनस्य मातङ्गो यक्षो नीलवर्णः करीन्द्रवाहन-श्चतुर्भुजः बिल्वपाशशालिदक्षिणपाणिद्वयो नकुलाङ्कुशशोभितवामक-रद्वयश्च ७, श्रीचन्द्रप्रभस्य विजयो यक्षो नीलाङ्गो हंसवाहनस्त्रिलोचनो

१ मतान्तरे–वृषवाहन २ नवाभ । ३ तुरग ४ वज्रा०

द्विबाहुः पार्श्वोत्तदक्षिणकरो मुद्गरमुद्राभपाणिश्च ८, श्रीसुविधेरजितो यक्षः श्वेताङ्गः कूर्मवाहनश्चतुर्भुजो मातुलिङ्गाऽक्षमालान्वितदक्षिणपाणिद्वयो नकुलकुन्तोऽन्वितवामकरद्वयश्च ९, श्रीशीतलस्य ब्रह्मा यक्षस्त्र्यक्षश्चतुर्मुखः श्वेततनुः पद्मासनासीनश्चतुर्भुजो मातुलिङ्गमुद्गरवरदद क्षिणपाणिद्वय पाशाऽभयदमाममानवामकरद्वयश्च, मतान्तरे पुनरष्ट पाणिर्मातुलिङ्गाऽभयपाशमुद्गरधारिदक्षिणहस्तचतुष्टयो नकुलगदाङ्कु-शाक्षसूत्राङ्कुशमुद्रामकरचतुष्कश्च १०, श्रेयांसजिनस्य मनुजो मता-न्तरेणेश्वरो यक्षस्त्र्यक्षः श्वेतवर्णो वृषभाश्रयश्चतुर्बाहुर्मातुलिङ्गगदा-युक्तदक्षिणपाणिद्वयो नकुलाऽक्षमालान्वितवामकरद्वयश्च ११, श्रीवासुपूज्यस्य सुरकुमारो यक्षः श्वेताङ्गो हंसवाहनश्चतुर्भुजो मातुलिङ्गशरान्वितदक्षिणपाणिद्वयो नकुलधनुर्वरवामभुजद्वयश्च १२, श्रीविमलस्य षण्मुखो यक्षः द्वादशाक्षः शिखियानो वक्षरक् द्वादशभुजः फलचक्रपुस्तकपाशाऽक्षसूत्रयुतदक्षिणपाणिषट्को नकुल-चक्रधनुःफलकाऽङ्कुशाऽभयदविराजितवामकरषट्कश्च १३, अन-न्तजितः पातालयक्षस्त्रिमुखः पञ्चकधरस्ताम्रतनुः कान्तिर्मकरवाहनः षड्भुजः पद्मखड्गपाशाङ्कितदक्षिणपाणित्रयो नकुलफलकाऽक्षमा-लाकमनीयवामभुजत्रयश्च १४, श्रीधर्मनाथस्य किन्नराऽभिधाने

१ मतान्तरेण-षड्ग २ रक्ता ३ द्वादशलोचन ४ श्यामाङ्ग

यक्षस्त्रिमुख षण्नयन कूर्मस्थो रक्तच्छवि षण्मुखो मातुलिङ्ग-
गदाऽभयद्युतदक्षिणदोस्त्रयो नकुलाम्भोजाक्षमालाऽङ्कुशपृथुवाम-
करत्रयश्च १५, श्रीशान्तिनाथस्य गरुडाख्यो यक्ष क्रोडास्य
शिखिवाहन श्यामश्चतुर्भुजो बीजपूराम्बुजभ्राजमानदक्षिणपाणिद्वयो
नकुलाक्षसूत्रयुक्तवामपाणियुगलश्च १६, श्रीकुन्थोर्गन्धर्वयक्षोऽ-
सिताङ्गो हंसवाहनश्चतुर्बाहुर्वरदपाशान्वितदक्षिणपाणिद्वयो मातु-
लिङ्गाङ्कुशयुग्वामकरद्वयश्च १७, श्रीअरजिनस्य यक्षेन्द्रो
यक्षः षण्मुख श्यामाङ्ग शङ्खवाहनो द्वादशाक्षो मातुलिङ्गबाणा
सिमुद्गरपाशाभययुक्तदक्षिणपाणिषट्को नकुलधनुश्चर्मशूलाङ्कुशाक्ष-
सूत्रान्वितवामकरषट्कश्च[1] १८, मल्लिस्वामिनः कुबेरनामा यक्ष-
श्चतुर्मुखोऽष्टाक्ष इन्द्रायुधसमवर्णो दन्तिवाहनोऽष्टपाणिर्वरदपरश्व
शूलाऽभयद्युतदक्षिणपाणिचतुष्टयो बीजपूरशक्तिमुद्गराऽक्षसूत्राऽ-
न्वितवामहस्तचतुष्कश्च १९, श्रीमुनिसुव्रतस्य वरुणो यक्षस्त्रिनेत्रश्च
तुराननः श्वेताङ्गस्त्रिनेत्रवृषभवाहनो जटामुकुटभूषितोऽष्टबाहुर्मातुलि-
ङ्गगदाबाणशक्तियुक्तदक्षिणपाणिचतुष्को नकुलाक्ष[3]सूत्रधनुःपरशु
समन्वितवामकरचतुष्कश्च २०, नमिजिनस्य भृकुट्याख्यो यक्षश्च-
तुर्मुख स्वर्णरुक् वृषासनोऽष्टबाहुर्मातुलिङ्गशक्तिमुद्गराऽभय-

१ मतान्तरे अष्टदशलोचन २ द्वादशलोचन ३ पद्म०
४ द्वादशाक्ष ।

शोभितदक्षिणपाणिचतुष्टयो नकुलपरशुवज्राऽक्षसूत्रसमन्वितवामकरचतुष्कश्च २१, श्रीअरिष्टनेमिनो गोमेधो यक्षस्त्रिमुखः श्यामवर्ण श्यामाङ्गरुचि पुरुषवाहन षड्भुज मातुलिङ्गपरशुचक्राङ्कितदक्षिणपाणित्रयो नकुलशूलशक्तियुक्तवामकरत्रयश्च २२, पार्श्वप्रभोर्वामनो मतान्तरेण पार्श्वाख्यो यक्ष कुञ्जरास्य कूर्मासनोऽसितद्युतिर्मूर्ध्नि फणिफणाछत्रश्चतुर्भुजो मातुलिङ्गोरगयुक्तदक्षिणपाणिद्वयो नकुलना-गाधिष्ठितवामकरद्वयश्च २३, श्रीवर्द्धमानस्वामिनो मातङ्गो यक्ष करिवराह्नोऽसितकान्तिर्द्विभुजो नकुलकलितदक्षिणपाणिर्मातुलिङ्ग-सङ्गतवामहस्तश्चेति ॥ २४ ॥ गाथाद्वयार्थः ॥ ५७ । ५८ ॥

इदानीं ' देवीओ ' त्ति त्रिंश स्थान विवरीतुमाह—

देवीओ चक्केसरी १
अजिया २ दुरिआरि ३ कालि ४ महकाली ५ ।
सामा ६ संता ७ जाला ८
सुतारया ९ सोअ १० सिरिवच्छा ११ ॥५९॥
पवरा १२ विजय १३ कुसा १४
पण्णत्ती १५ निव्वाणि १६ अच्चुआ १७ धरणी १८।
वइरुट्ट १९ छुत्त २० गधारी २१
अंब २२ पउमावई २३ सिद्ध २४ ॥ ६० ॥

व्याख्या—दवीओ इत्यादि, तत्र प्रथमतीर्थपतेश्चक्रेश्वरी शासनदेवता मतान्तरेणाऽप्रतिचक्रा सुवर्णसवर्णवर्णा सुपर्णवाहनाऽष्टभुजा चक्रपाशेषुवरविराजितदक्षिणपाणिचतुष्टया चक्राऽङ्कुशधनुर्वज्रविभूषितवामहस्तचतुष्का १, श्रीअजितजिनस्याऽजितबलाऽजिता वा देवता कनकद्युतिर्लोहासनसमासीना चतुर्बाहुर्वरदपाशशालिदक्षिणकरद्वया बीजपूराङ्कुशोद्भासितवामहस्तद्वितया च २, श्रीसम्भवस्वामिनो दुरितारिका देवी गौराङ्गी उरभ्रवाहना चतुर्भुजा वरदाऽक्षसूत्रयुतदक्षिणदोर्युगा फलाऽभयभद्रवामकरद्वया च ३, श्रीअभिनन्दनस्य काली देवता श्यामशरीरा कमलवाहना चतुर्हस्ता वरदपाशाङ्कितदक्षिणपाणिद्वया नागाङ्कुशाधिष्ठितवामकरद्वया च ४, श्रीसुमतिनाथस्य महाकाली शासनदेवता कनककान्तिरम्भोरुहासना चतुर्बाहुर्वरदपाशभूषितदक्षिणकरद्वया मातुलिङ्गाऽङ्कुशयुक्तवामपाणिद्वया च ५, पद्मप्रभस्य श्यामा मतान्तरेणाऽच्युता श्यामाङ्गी नरवाहना चतुर्भुजा वरदपाशशोभितदक्षिणपाणिद्वया[1] कोदण्डाऽभयमण्डितवामहस्तद्वया च ६, श्रीसुपार्श्वस्य शान्ता देवी सुवर्णवर्णा फणीन्द्रवाहना चतुर्भुजा वराक्षसूत्रयुक्तदक्षिणपाणिद्वया शूलाऽभय

१ मतान्तरेण—नरवाहन २ गौराङ्गिना ३ पाश० ४ मातुलिङ्गा-ङ्कुशवामहस्तद्वया च

भृङ्गामवाहुद्वया च ७, श्रीचन्द्रप्रभस्य ज्वाला मतान्तरेण भृकुटिर्देवता सुवर्णवर्णा हंसवाहना चतुर्हस्ता खड्गमुद्गरयुतदक्षिण-दोर्द्वया फलकपरशुशालिवामकरद्वया च ८, श्रीसुविधिस्वामिन सुतारा देवी गौराङ्गी वृषभवाहना चतुर्भुजा वरदाक्षसूत्रभूषित-दक्षिणपाणिद्वया कलशाऽङ्कुशाऽन्वितवामकरद्वया च ९, श्रीशीतल-जिनस्याऽशोका देवी मुद्गाभा कमलवाहना चतुर्भुजा वरदपाशभासित-दक्षिणपाणिद्वया फलाङ्कुशभूषितवामकरद्वया च १०, श्रीश्रेयांसस्य श्रीवत्सा मतान्तरेण मानवी देवी गौरशरीरा सिंहवाहना चतुर्भुजा वरदमुद्गरान्वितदक्षिणपाणिद्वया कलशाङ्कुशप्रशस्यवामकरद्वया च ११, श्रीवासुपूज्यस्य प्रवरा मतान्तरेण चण्डा देवी श्यामभासदेहा याहवाहना चतुर्भुजा नक्शक्तियुक्तदक्षिणपाणिद्वया पुष्पगदाधृत-वामहस्तयुगला च १२, श्रीविमलस्वामिनो विजया मतान्तरेण विदिता देवी स्वर्णाभा कमलवाहना चतुर्भुजा वाणपाशाश्रितदक्षिण पाणिद्वया धनुर्नागसङ्गतवामकरद्वया च १३, श्रीअनन्तजिनोऽङ्कुशा देवी गौरशरीरा कमलासना द्विभुजा फलकस्फुरितदक्षिणपाणि अङ्कुशाङ्कितवामहस्ता च, मतान्तरेण चतुर्भुजा पाशासिलक्षि

१ बिडालवाहना बलात्कारत्यजीवविशेषविदारा वा २ फलका० ३ पद्म।

वर्णा सिंहवाहना चतुर्भुजा आम्रलुम्बीपाशान्वितदक्षिणकरद्वया पुत्राङ्कुशान्वितवामकरद्वया च २२, श्रीपार्श्वप्रभोः पद्मावती शासनदेवता स्वर्णाभा कुर्कुटोरगवाहना चतुर्भुजा पद्मपाशान्वितदक्षिणपाणिद्वया फलाङ्कुशाङ्कितवामभुजद्वया च २३, श्रीमद्वर्द्धमानस्वामिन सिद्धायिका शासनाऽधिष्ठात्री देवता हरितवर्णा सिंहवाहना चतुर्भुजा पुस्तकाऽभययुक्तदक्षिणपाणिद्वया बीजपूरकवीणान्वितवामकरद्वया चेति २४, अत्र च प्रकरणकारेण यक्षाणां देवीनां च केवलानि नामान्येवाऽभिहितानि न पुनर्वर्णवाहनायुधादिस्वरूपं निरूपितं अस्माभिस्तु सदुपयोगित्वात् ग्रन्थान्तरानुसारेण किञ्चित्तद्वर्णवाहनभुजप्रहरणादिस्वरूपं निरूपितमिति ॥ ५९ । ६० ॥

इदानीं ' सिद्धिट्ठाण 'ति एकत्रिंशं द्वारं विवरीषुराह—

अट्ठावयम्मि उसभो वीरो पावाइ चंप वसुपुज्जो ।
उज्जितम्मि य नेमी सम्मए सेसया सिद्धा ॥ ६१ ॥

व्याख्या—अट्ठेत्यादि, श्रीऋषभस्वामी अष्टापदपर्वते, श्रीवीरजिनोऽपापायां पुर्यां, वासुपूज्यश्चम्पायां, 'तु' पुनरर्थे, नेमी जिन उज्जिन्तगिरौ सिद्धिसौधमध्यारुरोह, शेषाः पुनरजिनाद्याः विंश-

१ सिंहवाहना. २ पाशाभयद्वदक्षिणकरद्वया ।

निर्नीर्थकृत सम्मेतशैलशिखरे सिद्धा परमानन्दपदं प्राप्ता इति गाथार्थ ॥ ६१ ॥

साम्प्रत यस्य येन तपसा सिद्धिस्तद्दर्शयन्नाह—

निव्वाण सपत्तो चउदसभत्तेण पढमजिणचंदो ।
सेसा उ मासिएण वीरजिणिंदो य छट्टेण ॥ ६२ ॥

व्याख्या—निव्वाण ति, प्रथमजिनचन्द्र ऋषभश्चतुर्दशभक्तै मोपवासषट्केन निर्वाण परमानन्दपद सम्प्राप्त, शेषा अजिताद्या पार्श्वपर्यन्ता द्वाविंशतिर्जिना मासिकेन त्रिंशतोपवासै, वीरजिनेन्द्रश्च षष्ठेनोपवासद्वयेनेति गाथार्थ ॥ ६२ ॥

इदानीं ये यावता परिवारेण सिद्धास्तान्ज्ञापयितुमाह—

एगागी वीरजिणो तित्तीसमुणीहि सजुओ पासो ।
पचहि सएहि छत्तीसएहिं नेमी गओ सिद्धिं ॥ ६३ ॥
मल्लिसुपासा पचहिं सएहि छहिं वासुपुज्जजिणचंदो ।
अट्ठहिं सएहिं धम्मो तिउत्तरेहिं च पउमाभो ॥ ६४ ॥
नवहि सएहि सती छहिं सहस्सेहिं परिवुडो विमलो ।
उसह दस सहस्सतो सेसा उ सहस्सपरिवारा ॥ ६५ ॥

व्याख्या—एगागीत्यादि, तत्रैकाकी अद्वितीय श्रीवीरजिन सिद्धिं गत, त्रयस्त्रिंशता साधुभि सह पार्श्वप्रभु शिवं भेजे, षट्त्रिंशदधिकै पञ्चभि शतै सह नेमिजिन सिद्धिं गत, श्रीमल्लिस्वामी सुपार्श्वजिनश्च पञ्चभि श्रमणशतै समं शिवं भेजे, षड्भि शतै श्रीवासुपूज्यजिनचन्द्र सिद्ध, श्रीधर्मजिनोऽष्टभि शतै साकं परिनिर्वृत्त, पद्मप्रभस्तूत्तरैरष्टभि शतै सिद्धिसौधमध्यारुरोह, श्रीशान्तिजिनस्तु नवभि श्रमणशतै समं मुक्तिमगात्, षड्भि सहस्रै परिवृतो विमलो निर्वृतिमियर्त्ति स्म, तथा ऋषभ प्रथम तीर्थकृत् दशभि सहस्रै श्रयं श्रियमशिश्रयत्, अनन्तजिज्जिन सप्तभि सहस्रैर्युत परमानन्दपदं प्रपेदे, शेषा पुनरजितसम्भवाऽभिनन्दनसुमतिचन्द्रप्रभसुविधिशीतलश्रेयांसकुन्थुनाथाऽरनाथमुनिसुव्र

---

१ अत्र चाऽऽवश्यकनिर्युक्तिसारा अट्ठसएण धम्मो' त्ति अष्टोत्तरशतेन साधूना परिवृत धर्म सिद्ध इत्यर्थ 'पउमाभे तिन्नि अट्ठसय पद्मप्रभ तीर्थकृद्विषये त्रीण्यष्टोत्तरशतानि साधूना निर्वृतानीत्यवगन्तव्य, त्रिगुणमष्टोत्तरशतमित्यर्थ त्रीणि शतानि चतुर्विंशत्यधिकानीति यावत् ' इति व्याख्यान्ति, प्रवचनसारोद्धारवृत्तिकर्त्तारोऽप्येवमेव सप्तत्रिशतस्थानवृत्तिनिर्मातृभिस्तैन धर्मजिनस्याऽष्टाधिकशतेन, पद्मप्रभस्याऽष्टाधिकैस्त्रिभि शतैर्मोक्ष इति भेदो दृश्यते अस्माभिस्तु प्रधान दक्षाद्याद्यभिप्रायेणैतत्प्रकरणप्रणेत्रभिप्राय प्रमाणीकृत्यैव व्याख्यातमस्ति विरुद्ध चेत्संशोधनीय कृपया जैनसिद्धान्तविशारदैर्विद्वद्भिरिति ॥

ततोऽपि जिनेन्द्रा द्वादश तीर्थकृत प्रत्येकमेकैकसहस्रपरिवृता सिद्धा परिनिष्ठिताऽष्टकर्मक्षया बभूवुरिति गाथात्रयार्थः ॥ ६३।६४।६५ ॥

इदानीं शास्त्रसमाप्तिं चिकीर्षुरुपसंहरन्नाह—

**इय इकवीसठाणा उद्धरिय सिद्धसेणसूरीहिं ।**
**चउवीसजिणवराणं असेससाहारणा भणिया ॥ ६६ ॥**

व्याख्या—'इति' परिसमाप्तौ, श्रीऋषभादिचतुर्विंशतिजिन-वराणामशेषसाधारणान्यमून्येकविंशतिस्थानानि समयसमुद्रादुद्धृत्य ननु स्वमनीषया श्रीसिद्धसेनसूरिभिर्भणितानि कथितानीति गाथार्थः ॥ ६६ ॥

इति श्रीमत्तपागच्छगगनाङ्गणदिनमणिविद्वच्चूडामणिजैनाचार्यन्याया-
म्भोनिधिश्रीमद्विजयानन्दसूरीश्वरापरनामश्रीमदात्मारामजी-
महाराजशिष्यरत्नक्षितिविहारिश्रीमदमरविजयमुनि-
पुङ्गवचरणारविन्दचञ्चरीकायमाणचतुरविजयमुनि-
प्रणीता श्रीसिद्धसेनसूरिप्रणीतैकविंशति-
स्थानप्रकरणस्य श्रेयःश्र्यङ्का
बोधदीपिकानाम्नी टीका
समाप्तिमफाणीत् ।

## प्रशस्ति ।

प्रस्फूर्जत्तपगच्छतारकमयमोल्लासनाऽहर्मणि-
स्तेजस्विप्रवरोऽजनिष्ट विजयानन्दाभिध, सूरिराट् ।
गोभिर्दुर्द्धरधूकसन्ततिरर यस्याऽतिखिन्ना हृदि
नोर्ध्वाकुर्तुमल क्षितौ स्वरदन वान्स्य तत् का कथा ? ॥१॥
तच्छिष्य शान्तमूर्त्तिः श्रमणगणनुतः सद्गुणग्रामधामा
जज्ञे विद्वद्वरः श्रीमदमरविजयो दाक्षिणात्योपकारी ।
कृत्वा मूर्त्तिद्विषां यो हृदयनयनयोरञ्जन सममाण
दूरीचक्रे दयार्द्रघनवृजिनभवामन्यतां ज्ञानवैद्यः ॥ २ ॥
तत्पादाम्भोरुहमधुकर स्वल्पधीरेकविंश-
स्थानेष्वेना चतुरविजयो बोधिलाभाय वृत्तिम् ।
चक्रे वर्षे नवहयनिधीन्दुममे (१९७९) वैक्रमीये
विद्वल्लोकैर्जयतु सुचिर शासने वाच्यमाना ॥ ३ ॥
यदर्जित पुण्यमिमां विधाय टीकां मया तेन तनोतु वास ।
भवे भवेऽन्त'करणे मदीये श्रेय श्रियां धाम जिनेन्द्रभक्ति' ॥
श्रीएकविंशतिस्थानटीकेय बोधदीपिका ।
संशोध्या कृपया सद्भिर्भव्यानां बोधिदीपिका ॥ ४ ॥



| | जिननाम | ऋषभ १ | अजित २ | संभव ३ | अभिनंदन ४ | सुमति ५ | पद्मप्रभ ६ |
|---|---|---|---|---|---|---|---|
| १ | च्यवनविमान | सर्वार्थसिद्ध | विजयवि | उपरि भैवे नीचके वि | जयतवि | जयतवि | उपरि भैवे |
| २ | जन्मनगरी | विनीता | अयोध्या | श्रावस्ती | विनीता | कौशलपुर | कौशांबी |
| | पितानाम | नाभिकुलकर | जितशत्रु | जितारि | संवरराजा | मेघ राजा | धर राजा |
| | माताताम | मरुदेवा | विजया | सेना | सिद्धार्था | मंगला | सुसीमा |
| | जन्मनक्षत्र | उत्तराषाढा | रोहिणी | मृगशिर | पुनर्वसु | मघा | चित्रा |
| ६ | जन्मराशी | धनु | वृष | मिथुन | मिथुन | सिंह | कन्या |
| ७ | लञ्छन | वृषभ | गज | अश्व | कपि | क्रौंच | कमल |
| ८ | देहमान | ५०० धनु | ४५० धनु | ४०० धनु | ३५० धनु | ३०० धनु | २५० धनु |
| ९ | सर्वायु | ८४ लाख पूर्व | ७२ ला पू | ६० ला पू | ५० ला पू | ४० ला पू | ३० ला पू |
| १० | देहवर्ण | पीतवर्ण | पीत | पीत | पीत | पीत | रक्त |
| ११ | अंतर | ० | ५० ला को सागरोपम | ३० ला को सागरोपम | १० ला को सागरोपम | ९ ला को सागरोपम | ९० हजा को सागरोपम |
| १२ | दिक्षा<br>"<br>"<br>" | राज्य करी विवाह करी ४ ह साथ विनीतामां | राज्य करी विवाह करी हजार साथ जन्मनगरे | राज्य करी विवाह करी हजार साथे जन्मनगरे | राज्य करी विवाह करी हजार साथे जन्मनगरे | राज्य करी विवाह करी हजार साथे जन्मनगरे | राज्य करी विवाह करी हजार साथे जन्मनगरे |

| | जिननाम | ऋषभ १ | अजित २ | संभव ३ | अभिनंदन ४ | सुमतिनाथ ५ | पद्मप्रभ ६ |
|---|---|---|---|---|---|---|---|
| १३ | दीक्षातप | छठ-तप करी | षष्ठ तप | षष्ठ तप करी | छठ तप करी | नित्यभक्त | छठ तप करी |
| १४ | पारणा , | श्रेयांसना हथे इक्षुरसथी वर्षांना अंते | ब्रह्मदत्तना हाथे परमान्नथी बीजे दिन | सुरेंद्रदत्तना हाथे परमान्नथी बीज दिवसे | इंद्रदत्तना हाथे परमान्नथी बीज दिवसे | पद्मना हाथे परमान्नथी बीज दिवसे | सोमदेवथी परमान्नथी बीजे दिवसे |
| १५ | ज्ञानस्थ न ज्ञानतप चैत्यवृक्ष | पुरिमताल अट्ठम तपथी यग्रोधवृक्ष | प्रम यास्थाने छठ भक्त सप्तपर्ण | प्रम यास्थाने छठ भक्त शाल | दीक्षास्थाने छठ भक्त प्रियंगु | दीक्षास्थाने छठ भक्त प्रियंगु | दीक्षास्थाने छठ भक्त छत्राभ |
| १६ | गणधरमान | ८४ | ९५ | १०२ | ११६ | १०० | १०७ |
| १७ | साधुसंख्या | ८४ हजार | १ लाख | बे लाख | त्रण लाख | ३ ला २० ह | ३ ला ३० ह |
| १८ | आर्यासंख्या | ३ लाख | ३ला ३० ह | ३ला ३६ ह | ६ ला ३० ह | ५ ला ३० ह | ४ ला २० ह |
| १९ | यक्षनाम | गोमुख | महायक्ष | त्रिमुख | ईश्वर | तुंबरु | कुसुम |
| २ | यक्षणीनाम | चक्रेश्वरी | अजिता | दुरितारिका | काली | महाकाली | श्यामा |
| २१ | सिद्धिस्थान सिद्धितप सिद्धिपरिवार | अष्टापद पर्वत १४ भक्त तप १० ह साथे | सम्मेत शिखर मासिक तप सहस्र साथे | सम्मेत शिखर मासिक तप सहस्र साथे | सम्मेत शैल मासिक तप सहस्र साथे | सम्मेत शिखर मासिक तप सहस्र साथे | सम्मेत शैले मासिक तप ८०३ साथे |

| | जिननाम | सुपार्श्व ७ | चन्द्रप्रभ ८ | सुविधि ९ | शीतल १० | श्रेयांस ११ | वासुपूज्य १२ |
|---|---|---|---|---|---|---|---|
| १ | च्यवनविमान | मध्यग्रै ग्रैवेयक उपरलु | वैजयंत | आनतवि | प्राणतदे | अच्युतवि | प्राणतवि |
| २ | जन्मनगरी | वाराणसी | चन्द्रपुरी | काकन्दी | भद्दिलपुर | सिंहपुर | चंपापुरी |
| ३ | पितानाम | प्रतिष्ठ | महासेन | सुग्रीव | दृढरथ | विष्णु | वसुपूज्य |
| ४ | मातानाम | पृथिवी | लक्ष्मणा | रामा | नंदा | विष्णुदेवी | जया देवी |
| ५ | जन्मनक्षत्र | विशाखा | अनुराधा | मूल | पूर्वाषाढा | श्रवण | शतभिषा |
| ६ | जन्मराशि | तुला | वृश्चिक | धनु | धनु | मकर | कुम्भ |
| ७ | लञ्छन | स्वस्तिक | चन्द्र | मगर | श्रीवत्स | खड्ग | महिष |
| ८ | देहमान | १०० धनु | १५० धनु | १०० धनु | ९० धनु | ८० धनु | ७० धनु |
| ९ | सर्वायु | २ ला पू | १ ला पू | २ ला पू | १ ला पू | ८४ लाख वर्ष | ७२ ला वर्ष |
| १० | देहवर्ण | स्वर्णवर्ण | श्वेत | श्वेत | पीत | पीत | रक्त |
| ११ | जिनांतर | ९ हजार को सागरोपम | ९० कोटी सागरोपम | ९० कोटी सागरोपम | ९ कोटी सागरोपम | ६६ला २६ह १०० वर्ष हीन सा को कोटी | ५४ सागर |
| १२ | दीक्षा ,, ,, | राज्य करी विवाह करी हजार साथे जन्मनगरे | राज्य करी विवाह करी हजार साथे जन्मनगरे | राज्य करी विवाह करी हजार साथे जन्मनगरे | राज्य करी विवाह करी हजार साथे जन्मनगरे | राज्य करी विवाह करी हजार साथे जन्मनगरे | कुमारा विवाह करी ६०० साथे जन्मनगरे |

| | जिननाम | सुपार्श्वनाथ ७ | चन्द्रप्रभ ८ | सुविधिनाथ ९ | शीतलनाथ १० | श्रेयांसनाथ ११ | वासुपूज्य १२ |
|---|---|---|---|---|---|---|---|
| १३ | दीक्षातप | [illegible] तप करी | छठ तप करी | [illegible] तप करी | छठ तप करी | [illegible] तप करी | चउत्थ भत्त |
| १४ | पारणा | महेन्द्रना हाथे परमान्नथी बीजे दिवस | सोमदत्तना हाथे परमान्नथी बीजे दिवसे | पुष्पना हाथे परमान्नथी बीजे दिवसे | पुनर्वसुथी परमान्नथी बीजे दिवसे | नन्दना हाथे परमान्नथी बीजे दिवसे | सुनन्दना हाथे परमान्नथी बीजे दिवस |
| १५ | ज्ञानस्थान ज्ञानतप चैत्यवृक्ष | दीक्षास्थाने छठ भत्त शिरीष | दीक्षास्थाने छठ भत्त नाग | दीक्षास्थाने छठ भत्त मल्लिका | दीक्षास्थाने छठ भत्त प्रियंगु | दीक्षास्थाने छठ भत्त तिंदुक | दीक्षास्थाने चउत्थ भत्त पाडल |
| १६ | गणधरमान | ९५ | ९३ | ८८ | ८१ | ७२ | ६६ |
| १७ | साधुसंख्या | ३ लाख | अढी लाख | २ लाख | एक लाख | ८४ हजार | ७२ हजार |
| १८ | आर्यासंख्या | ४ला ३ ह | ३ला ८०ह | १ला २०ह | १ला उपर ६ | १ ला ३ ह | १ लाख |
| १९ | यक्षनाम | मातंग | विजय | अजित | ब्रह्मा | मनुज | सुरकुमार |
| २० | यक्षिणीनाम | शांता | ज्वाला | सुतारा | अशोका | श्रीवत्सा | प्रवरा |
| २१ | सिद्धिस्थान सिद्धितप सिद्धिपरिवार | सम्मेत शैल मासिक ५ सो साथे | सम्मेत शैल मासिक हजार साथे | सम्मेत शैल मासिक हजार साथे | सम्मेत शैल मासिक हजार साथे | सम्मेत शैल मासिक हजार साथे | चंपापुरी मासिक ६ सो साथे |

| | जिननाम | विमल १३ | अनंत १४ | धर्मनाथ १५ | शांतिनाथ १६ | कुंथुनाथ १७ | अरनाथ १८ |
|---|---|---|---|---|---|---|---|
| १ | च्यवनविमान | सहस्रारवि | प्राणतवि | विजयवि | स र्थसिद्धि | सर्वार्थसिद्धि | सर्वार्थसिद्धि |
| २ | जन्मनगरी | कांपिल्यपुर | अयोध्या | रत्नपुर | हस्तिनागपुर | गजपुर | गजपुर |
| ३ | पितानाम | कृतवर्म्मा | सिंहराजा | भानु | विश्वसेन | शूर | सुदर्शन |
| ४ | मातानाम | श्यामा | सुयशा | सुव्रता | अचिरा | श्री | देवी |
| ५ | जन्मनक्षत्र | उत्तराभाद्रपद | रेवती | पुष्य | भरणी | कृत्तिका | रेवती |
| ६ | जन्मराशी | मीन | मीन | कर्क | मेष | वृष | मीन |
| ७ | लच्छन | शूकर | श्येन | वज्र | हरिण | छाग | नंद्यावर्त |
| ८ | देहमान | ६० धनु | ५० धनु | ४५ धनु | ४० धनु | ३५ धनु | ३० धनु |
| ९ | सर्वायु | ६० ला वर्ष | ३० ला वर्ष | १० ला वर्ष | १ ला वर्ष | ९५ ह० वर्ष | ८४ ह० वर्ष |
| १० | देहवर्ण | पीत | पीत | पीत | पीत | पीत | पीत |
| ११ | जिनांतर | ३० सागर | ९ सागरोपम | ४ सागरोपम | त्रिपादहीन ३ सागरोपम | पल्योपमार्द्ध | १ हजार कोटी वर्ष न्यून पल्योपम चतुर्भाग |
| १२ | दीक्षा<br>,,<br>,,<br>, | राज्य करी<br>विवाह करी<br>हजार साथे<br>जन्मनगरे | राज्य करी<br>विवाह करी<br>हजार साथे<br>जन्मनगरे | राज्य करी<br>विवाह करी<br>हजार साथे<br>जन्मनगरे | राज्य करी<br>विवाह करी<br>हजार साथे<br>जन्मनगरे | राज्य करी<br>विवाह करी<br>हजार साथे<br>जन्मनगरे | राज्य करी<br>विवाह करी<br>हजार साथे<br>जन्मनगरे |

| | जिननाम | सुपार्श्वनाथ ७ | चंद्रप्रभ ८ | सुविधिनाथ ९ | शीतलनाथ १० | श्रेयांसनाथ ११ | वासुपूज्य १२ |
|---|---|---|---|---|---|---|---|
| १३ | दीक्षातप | छठ तप करी | छठ तप करी | छठ तप करी | छठ तप करी | छठ तप करी | चउत्थ भत्त |
| १४ | पारणा | मद्दना हाथे परमान्नथी बीजे दिवसे | सोमदत्तना हाथे परमान्नथी बीजे दिवसे | पुष्यना हाथे परमान्नथी बीजे दिवसे | पुनर्वसुथी परमान्नथी बीजे दिवसे | नन्दना हाथे परमान्नथी बीजे दिवसे | सुनन्दना हाथे परमान्नथी बीजे दिवसे |
| १५ | ज्ञानस्थान ज्ञानतप चैत्यवृक्ष | दीक्षास्थाने छठ भत्त शिरीष | दीक्षास्थाने छठ भत्त नाग | दीक्षास्थाने छठ भत्त मल्लि | दीक्षास्थाने छठ भत्त प्रियंगु | दीक्षास्थाने छठ भत्त तिंदुक | दीक्षास्थाने चउत्थ भत्त पाडल |
| १६ | गणधरमान | ९५ | ९३ | ८८ | ८१ | ७२ | ६६ |
| १७ | साधुसंख्या | ३ लाख | अढी लाख | २ लाख | एक लाख | ८४ हजार | ७२ हजार |
| १८ | आर्यासंख्या | ४ला ३०ह | ३ला ८०ह | १ला २०ह | १ला उपर ६ | १ ला ३ ह | १ लाख |
| १९ | यक्षनाम | मातंग | विजय | अजित | ब्रह्मा | मनुज | सुरकुमार |
| २० | यक्षिणीनाम | शांता | ज्वाला | सुतारा | अशोका | श्रीवत्सा | प्रवरा |
| २१ | सिद्धिस्थान सिद्धितप सिद्धिपरिवार | सम्मेत शैल मासिक ५ सो साथे | सम्मेत शैले मासिक हजार साथ | सम्मेत शैले मासिक हजार साथ | सम्मेत शैले मासिक हजार साथे | सम्मेत शैले मासिक हजार साथे | चंपापुरी मासिक ६ सो साथ |

| | जिननाम | विमल १३ | अनंत १४ | धर्मनाथ १५ | शांतिनाथ १६ | कुंथुनाथ १७ | अरनाथ १८ |
|---|---|---|---|---|---|---|---|
| १ | च्यवनविमान | सहस्रारवि | प्राणतवि | विजयवि | सर्वार्थसिद्धि | सर्वार्थसिद्धि | सर्वार्थसिद्धि |
| २ | जन्मनगरी | काम्पिल्यपुर | अयोध्या | रत्नपुर | हस्तिनागपुर | गजपुर | गजपुर |
| ३ | पितानाम | कृतवर्म्मा | सिंहराजा | भानु | विश्वसेन | शूर | सुदर्शन |
| ४ | मातानाम | श्यामा | सुयशा | सुव्रता | अचिरा | श्री | देवी |
| ५ | जन्मनक्षत्र | उत्तराभाद्रपद | रेवती | पुष्य | भरणी | कृत्तिका | रेवती |
| ६ | जन्मराशी | मीन | मीन | कर्क | मेष | वृष | मीन |
| ७ | लञ्छन | शूकर | श्येन | वज्र | हरिण | छाग | नंद्यावर्त्त |
| ८ | देहमान | ६० धनु | ५० धनु | ४५ धनु | ४० धनु | ३५ धनु | ३० धनु |
| ९ | सर्वायु | ६० ला वर्ष | ३० ला वर्ष | १० ला वर्ष | १ ला वर्ष | ९५ ह० वर्ष | ८४ ह० वर्ष |
| १० | देहवर्ण | पीत | पीत | पीत | पीत | पीत | पीत |
| ११ | जिनांतर | ३० सागर | ९ सागरोपम | ४ सागरोपम | त्रिभागहीन ३ सागरोपम | पल्योपमार्द्ध | १ हजार कोटी वर्ष ऊन पल्योपम चतुर्भाग |
| १२ | दिक्षा<br>,,<br>,<br>,, | राज्य करी विवाह करी हजार साथे जन्मनगरे | राज्य करी विवाह करी हजार साथे जन्मनगरे | राज्य करी विवाह करी हजार साथे जन्मनगरे | राज्य करी विवाह करी हजार साथे जन्मनगरे | राज्य करी विवाह करी हजार साथे जन्मनगरे | राज्य करी विवाह करी हजार साथे जन्मनगरे |

| | जिननाम | विमल १३ | अनंतनाथ १४ | धर्मनाथ १५ | शांतिनाथ १६ | कुंथुनाथ १७ | अरनाथ १८ |
|---|---|---|---|---|---|---|---|
| १३ | दीक्षातप | छठ तप करी | छठ तप करी | छठ तप करी | छठ तप करी | छठ तप करी | छठ तप करी |
| १४ | पारणा | जयना हाथे परमान्नथी बीजे दिवसे | विजयना हाथे परमान्नथी बीजे दिवसे | धर्मसिंहना हाथे परमान्नथी बीजे दिवसे | सुमित्रना हाथे परमान्नथी बीजे दिवसे | व्याघ्रसिंहना हाथे परमान्नथी बीजे दिवसे | अपराजित हाथे परमान्नथी बीजे दिवसे |
| १५ | ज्ञानस्थान ज्ञानतप चैत्यवृक्ष | दीक्षास्थाने छठ भत्त जंबू | दीक्षास्थाने छठ भत्त अश्वत्थ | दिक्षास्थाने छठ भत्त दधिपर्ण | दीक्षास्थाने छठ भत्त नंदीवृक्ष | दीक्षास्थाने छठ भत्त तिलक | दीक्षास्थाने छठ भत्त चंपक |
| १६ | गणधर | ५७ | ५० | ४३ | ३६ | ३५ | ३३ |
| १७ | साधुसंख्या | ६८ हजार | ६६ हजार | ६४ हजार | ६२ हजार | ६० हजार | ५० हजार |
| १८ | आर्यासंख्या | १ला ८०० | ६२ हजार | ६२ ह ४० | ६१ ह ६०० | ६० ह ६० | ६० हजार |
| १९ | यक्षनाम | षण्मुख | पाताल | किंनर | गरुड | गंधर्व | यक्षेंद्रनामा |
| २० | देवीनाम | विजया | अंकुशी | प्रज्ञप्ति | निर्वाणी | अच्युता | धरणी |
| २१ | सिद्धिस्थान सिद्धितप सिद्धिपरिवार | सम्मेत शैले मासिक ६ ह साथे | सम्मेत शैले मासिक ७ हजार साथे | सम्मेत गैले मासिक ८०० साथे | सम्मेत शैले मासिक ९०० साथे | सम्मेत शैले मासिक हजार साथे | सम्मेतशैले मासिक हजार साथे |

| | जिननाम | मल्लिनाथ १९ | मुनिसुव्रत २० | नमिनाथ २१ | नेमनाथ २२ | पार्श्वनाथ २३ | श्रीवर्धमान २४ |
|---|---|---|---|---|---|---|---|
| १ | च्यवनविमान | जयंत | अपराजित | प्राणतकल्प | अपराजित | प्राणत | प्राणत |
| २ | जन्मनगरी | मिथिला | राजगृह | मिथिला | सौरीपुर | वाराणसी | क्षत्रियकुंड ग्राम |
| ३ | पितानाम | कुंभ | सुमित्र | विजय | समुद्रविजय | अश्वसेन | सिद्धार्थनृप |
| ४ | मातानाम | प्रभावती | पद्मा | [illegible] | शिवा | वामा | त्रिशला |
| ५ | जन्मनक्षत्र | अश्विनी | श्रवण | अश्विनी | चित्रा | विशाखा | उत्तराफाल्गुनी |
| ६ | जन्मराशि | मेष | मकर | मेष | कन्या | तुला | कन्या |
| ७ | लञ्छन | कलश | कच्छप | नीलोत्पल | [illegible] | सर्प | सिंह |
| ८ | देहमान | २५ धनु | २० धनु | १५ धनु | १० धनु | ९ हाथ | ७ हाथ |
| ९ | सर्वायु | ५५ ह० वर्ष | ३० ह० वर्ष | १० ह० वर्ष | १ ह० वर्ष | १०० वर्ष | ७२ वर्ष |
| १० | देहवर्ण | नीलवर्ण | श्याम | पीत | श्याम | नील | स्वर्णवर्ण |
| ११ | जिनांतर | १ हजार को वर्ष | ५४ लाख वर्ष | ६ ला वर्ष | ५ लाख वर्ष | ८३ हजार ७५० वर्ष अधिक | २५० वर्ष |
| १२ | दीक्षा<br>"<br>,<br>, | कुमार अपरि णीत ३०० स्त्री अने ३०० पुरुष जन्मनगरे | राज्य करी विवाह करी सहस्रसंगे जन्मनगरे | राज्य करी विवाह करी हजार साथे जन्मनगरे | कुमार अविवाहित सहस्र साथे द्वारिकामा | कुमार विवाह करी ३०० साथे जन्मनगरे | कुमार विवाह करी एकाकी जन्मनगरे |

| | जिननाम | मल्लिनाथ १९ | मुनिसुव्रत २० | नमिनाथ २१ | नमिनाथ २ | पार्श्वनाथ २३ | महावीर २४ |
|---|---|---|---|---|---|---|---|
| १३ | दीक्षातप | अष्टम तप | षष्ठ तप | षष्ठ [illegible] करी | छठ तप करी | अष्टम तप | छठ तप करी |
| १४ | पारणा | विश्वसेनना हाथ परमान्नथी बीजे दिवसे | ब्रह्मदत्तना हाथ परमान्नथी बीजे दिन | दिन्नना हाथे परमान्नथी बीज दिवस | वरदिन्नना हाथ परमान्नथी बीजे दिवसे | धन्यना हाथ परमान्नथी बीजे दिवसे | बहुलविप्रा हाथ परमान्नथी बीजे दिवसे |
| १५ | ,, ज्ञानस्थान ज्ञानतप चैत्यवृक्ष | दीक्षास्थाने अष्टमान्त अशोक | दीक्षास्थाने षष्ठतपांते चंपक | दीक्षास्थाने छठ भक्त बकुल | दीक्षास्थान अष्टमांत वेतस | दीक्षास्थाने अष्टमान्त धवृक्ष | ऋजुवालुकानदी छठ भक्त शालवृक्ष |
| १६ | गणधरमान | २८ | १८ | १७ | १८ | १ | ११ |
| १७ | साधुसंख्या | ४० हजार | ३० हजार | २० हजार | १८ हजार | १६ हजार | १४ हजार |
| १८ | आर्यासंख्या | ५५ हजार | ५० हजार | ४१ हजार | ४० हजार | ३८ हजार | ३६ हजार |
| १९ | यक्षनाम | कुबेर | वरुण | भृकुटिनामा | गोमेध | वामन | मातंग |
| २० | यक्षणीनाम | वैरोट्या | दत्ता | गांधारी | अंबा | पद्मावती | सिद्धायिका |
| २१ | सिद्धिस्थान सिद्धितप सिद्धिपरिवार | सम्मेत शैल मासिक ५०० साथे | सम्मेत शैले मासिक ६ साथे | सम्मेत शैले मासिक हजार साथे | गिरनार मासिक १६ साथ | सम्मेत शिखर मासिक ३३ मुनि साथे | पावापुरी छठ तपथी एकाकी |

॥ श्री ॥

श्रीमद्विजयानन्दसूरिपुरन्दरचरणेन्दिन्दिवराभ्यां नमो नम ।

श्रीमदमरविजयमुनिवर्यशिष्याणुचतुरविजयमुनिप्रणीतानि

# पञ्चदशतिथीचैत्यवन्दनानि ।



## अथ प्रतिपच्चैत्यवन्दनम् ॥ १ ॥

श्रेय श्रिया पात्रमपास्तकर्मा श्रीकुन्थुनाथो जिन आप मोक्षम् ।
यस्या तिथौ माधवमासि कृष्णे शुभानि सा न प्रतिपत्तनोतु ॥१॥

यस्यां दशक्षेत्रजिनेश्वराणां कल्याणकत्रिंशदर बभूवु ।
जिनेन्द्रपादाम्बुजभक्तिभाजा सुखानि सा न प्रतिपत्तनोतु ॥२॥

यस्या स्नेहनिबन्धने विगलिते श्रीवीरतीर्थशितु–
र्ज्ञान केवलमिन्द्रभूतिगणभृत् प्रात समासेदिवान् ।
एकत्व हृदि भावयन्प्रभुमता शुक्ले दले कार्त्तिके
श्रेय श्रीनिवहाय न प्रतिपदस्त्वेषा सता सत्तिथि ॥३॥

## अथ द्वितीयाचैत्यवन्दनम् ॥ २ ॥

श्रेय श्रिया वसतिवेश्म जिनोपदिष्टा
दुष्कर्ममर्मभिदुरा भविदेहभाजाम् ।
याऽऽनन्दमङ्गलवरी वृजिनौघहन्त्री
सा नस्तिथि शिवसुख ददता द्वितीया ॥१॥

जन्माऽभिनन्दनजिन समवाप माघ–
शुक्लेऽथ केवलमवाप च वासुपूज्य ।
यस्या तपस्यधवले च्यवन तथाऽर
सा नस्तिथि शिवसुख ददता द्वितीया ॥२॥

यस्या च माधवशितौ विगताष्टकर्मा
श्रीशीतलो जिनपति समवाप मोक्षम् ।
ऽऽभे नभ सितदले सुमतिरच्युतिं च
सा नस्तिथि शिवसुख ददतां द्वितीया ॥३॥

इत्याद्यनेकजिनराट्च्यवनादिकानि
कल्याणकानि दुरितौघविनाशकानि ।
यस्या बभूवुरनिश जिनभक्तिभाजा
सा नस्तिथि शिवसुख ददता द्वितीया ॥४॥

या धर्मद्वितय समुन्नयति च प्राणस्पृशा बन्धन–
द्वन्द्व ध्वसयते च दुर्गतियुगद्वारार्गलासन्निभा ।
दुर्ध्यानद्वितय भिनत्ति विमलध्यानद्वय पुष्यति
श्रेय श्रीनिचय दिशत्वनुदिन सा नो द्वितीया तिथि ॥१॥

अथ तृतीयाचैत्यवन्दनम् ॥ ३ ॥

चैत्रार्जुने दुस्तपसेतयातिर्ज्ञान ययौ कुन्थुजिनोऽथ यस्याम् ।
श्रेयासमुक्तिर्नभसोऽसिते च सा नस्तृतीया तनुतात्तिथि शम् ॥१॥
माघार्जुने श्रीविमलस्य जन्म श्रीधर्मनाथस्य च यत्र जज्ञे ।
ऊर्जार्जुने श्रीसुविधिर्जिनोऽभूत् सा नस्तृतीया तनुतात्तिथि शम् ॥२॥

दुर्लेश्यात्रितय भिनत्ति विमल लेश्यात्रय पुष्यति
दु शल्यत्रितय विनाशयति या पुष्णाति गुप्तित्रयम् ।
त्रैलोक्याभयदप्रदानचतुरा भव्याङ्गभाजा शुभा
श्रेय श्रीततिमातनोतु नितरा सा नस्तृतीया तिथि ॥३॥

अथ चतुर्थीचैत्यवन्दनम् ॥ ४ ॥

श्रेय श्रिया धाम जगाम यत्र ज्ञान च्युति मध्वसिते च पार्श्व ।
तपस्यशुक्ले च्यवन च मल्लि सा नश्चतुर्थी शिवतातयेऽस्तु ॥१॥

माघार्जुने श्रीविमलस्य दीक्षाऽभिनन्दनो राधसिते च्युतश्च ।
च्युत शुचौ कृष्णदले वृषाङ्क सा नश्चतुर्थी शिवतातयेऽस्तु ॥ ॥

दूरीकृत्य चतुष्कषायनिचय सञ्ज्ञाचतुष्काण्ड
छित्वा घातिचतुष्टयीं च विमला या नाशयित्वाऽङ्गिनाम् ।
दत्ते देवचतुर्निकायमहिता मुक्ति च भद्रङ्करां
श्रेय श्रीततिमातनोतु नितरा सा नश्चतुर्थी तिथि ॥२॥

॥ अथ पञ्चमीचैत्यवन्दनम् ॥ ५ ॥

श्रेय श्रिया दानविधानदक्षा कल्याणकैस्तीर्थकृता वलक्षा ।
या पापहर्त्री भविना सुकृत्यै सा पञ्चमी नस्तिथिरस्तु भूत्यै ॥१॥

चैत्रार्जुनेऽभूद्जिनस्य यस्या श्रीसम्भवाऽनन्तजितोश्च मोक्ष ।
चन्द्रप्रभो मध्वसिते च्युतश्च सा पञ्चमी नस्तिथिरस्तु भूत्यै ॥२॥

यत्राऽभवन्माधवकृष्णपक्षे श्रीकुन्थुनाथस्य जिनस्य दीक्षा ।
ज्येष्ठार्जुने धर्मजिनस्य मुक्ति सा पञ्चमी नस्तिथिरस्तु भूत्यै ॥३॥

नभ सिते यत्र च नेमिजन्मोर्जे सम्भव श्यामदले जिनोऽभूत् ।
जन्माऽऽप मार्गे सुविधिश्च कृष्णे सा पञ्चमी नस्तिथिरस्तु भूत्यै॥४॥

पञ्चेषुद्विपपञ्चवक्त्रसदृशा या प्राणिनां पञ्चम–
ज्ञानोल्लासकरी वशं नयति या पञ्चेन्द्रियार्थव्रजम् ।
या पञ्चाऽऽश्रवगेहमातिचतुरा पञ्चप्रमादापहा
श्रेयः श्रीततिमातनोतु नितरां सा पञ्चमी नस्तिथिः ॥५॥

## अथ षष्ठीचैत्यवन्दनम् ॥ ६ ॥

श्रीशीतले राधसितौ च्युतोऽर्हन् श्रेयांसनाथोऽप्यथ शुक्रकृष्णे ।
वीरच्युतिर्यत्र शुचौ वलक्षे श्रेयः श्रिये नस्तिथिरस्तु षष्ठी ॥ १ ॥
नभः सिते नेमिजिनस्य दीक्षा मार्गासितेऽभूत् सुविधेश्च यस्याम् ।
पद्मप्रभो माघसिते च्युतश्च श्रेयः श्रिये नस्तिथिरस्तु षष्ठी ॥२॥
ज्ञानी सुपार्श्वोऽथ तपस्यकृष्णे पौषार्जुनेऽमद्विमलोऽपि तद्वत् ।
यस्यां परिज्ञानसमस्तभावः श्रेयः श्रिये नस्तिथिरस्तु षष्ठी ॥ ३ ॥

## अथ सप्तमीचैत्यवन्दनम् ॥ ७ ॥

श्रेयः श्रिया सद्मनि यत्र जाते धर्मच्युतिर्माधवशुक्लपक्षे ।
आषाढकृष्णे विमलः शिवं ऽगान् सा सप्तमी नोऽस्तु तिथिः समृद्ध्यै ॥१
चन्द्रप्रभो मोक्षमगान्नभस्यकृष्णे च्युतः शान्तिजिनोऽपि यस्याम् ।
नभोऽसितेऽनन्तजिनच्युतिश्च सा सप्तमी नोऽस्तु तिथिः समृद्ध्यै ॥२॥

चन्द्रप्रभो ज्ञानमवाप यत्र मोक्ष सुपार्श्वश्च तपस्यकृष्णे ।
श्रेय श्रिय प्राप नरामरेन्द्र सा सप्तमी नोऽस्तु तिथि समृद्ध्यै ॥२॥

## अथाऽष्टमीचैत्यवन्दनम् ॥ ८ ॥

श्रेय श्रिया धाम तपस्यशुक्ले श्रीसम्भवस्य च्यवन तु यस्याम् ।
नेमि शिवोऽगाच्छुचिशुक्लपक्षे सैषाऽष्टमी स्ताच्छिवशर्मदा न ॥१॥

चैत्रासिते नाभिनरेन्द्रसूनोर्यस्या जनि शर्मकरी च दीक्षा ।
जन्माऽजितो माघसिते प्रपन्न सैषाऽष्टमी स्ताच्छिवशर्मणे न ॥२॥

मेजे शिव माधवशुक्लपक्षेऽभिनन्दन श्रीसुमतिर्मिनि च ।
ज्येष्ठासिते सुव्रतजन्म यत्र सैषाऽष्टमी स्ताच्छिवशर्मदा न ॥३॥

नभोऽसित श्रीनमिनाथजन्म नभ सिते यत्र च पार्श्वमुक्ति ।
च्युत सुपार्श्वश्च नभस्यकृष्णे सैषाऽष्टमी स्ताच्छिवशर्मदा न ॥४॥

इत्थ तीर्थकृतामभाष्यवचसा छिन्नाष्टदुष्कर्मणां
पूता ज्ञानवता सुराचनभृता जन्मादिकल्याणकै ।
उद्यद्भक्तिजुषा विशुद्धतपसा सत्तीर्थयात्रादिषु
श्रेय श्रीततिमातनोतु नितरां सैषाऽष्टमी सत्तिथि ॥५॥

### अथ नवमीचैत्यवन्दनम् ॥ ९ ॥

श्रेय श्रिया धाम मघोर्वलक्षे मोक्ष प्रपन्न सुमनिर्जिनेन्द्र ।
यस्या वैशाखसिते च दीक्षा सा नस्तिथि स्तान्नवमी सुखाय ॥१॥
ज्येष्ठेऽसिते मोक्षमनीत्सदोप शिवाय यस्या मुनिसुव्रतोऽर्हन् ।
श्रीवासुपूज्यश्च्यवन च शुभ्रे सा नस्तिथि स्तान्नवमी सुखाय ॥२॥
आषाढकृष्णे नमिनाथदीक्षा नभोऽसिते कुन्थुजिनच्युतिश्च ।
नमस्यशुद्धे सुविधि शिवप्रात् सा नस्तिथि स्तान्नवमी सुखाय ॥३॥
पौषार्जुने ज्ञानमवाप शान्तिर्दीक्षा जिनो माघसितेऽजितश्च ।
तपस्यकृष्णे सुविधिश्च्युतोऽर्हन् सा नस्तिथि स्तान्नवमी सुखाय ॥४॥

इत्थ सद्गुणधामन जिनवरा यस्या स्वमन्यच्च्युति–
दीक्षाज्ञानशिवश्रिय त्रिभुवनानन्दप्रदा लेभिरे ।
नृणा यत्तपसा नराऽपि निधय पादे लुठन्त्यञ्जसा
श्रेय श्रीततिमातनोतु नवमी सा नस्तिथि सर्वदा ॥५॥

### अथ दशमीचैत्यवन्दनम् ॥ १० ॥

श्रीवीरदीक्षा मृगशीर्षकृष्णे मार्गोऽर्जुनेऽस्य जनि शिव च ।
पौषाऽसिते पार्श्वजनिश्च यस्या सा श्रेयसे स्याद्दशमी तिथिर्न ॥१॥

श्रीवर्द्धमानचरमो जिनेन्द्रोऽभूत् केवली माधवशुक्लपक्षे ।
वैशाखकृष्णे नमिराप मोक्षं सा श्रेयसे स्याद्दशमी तिथिर्नः ॥२॥

दशप्रकारं मुनिराजधर्मं पुष्णाति याऽसत्यभेदरूपा ।
मिथ्यात्वभेदांश्च दशाऽपि हन्ति सा श्रेयसे स्याद्दशमी तिथिर्नः ॥३॥

## अथैकादशीचैत्यवन्दनम् ॥ ११ ॥

श्रेयः श्रिया मन्दिरमिन्दिरालीलीलाऽस्य धर्मंमहीधवज्रम् ।
प्रोक्ता हिताया ऽद्भुता जिनैर्या सैकादशी नो वितनोतु भद्रम् ॥१॥

यस्यां मधुश्वेतदले विशालितर्हिन प्रपेदे सुमतिर्जिनेन्द्रः ।
पद्मप्रभो मोक्षमशुभनाम सैकादशी नो वितनोतु भद्रम् ॥२॥

श्रीमल्लिनाथो मृगशीर्षशुक्ले जनिं च दीक्षामरमल्लितायौ ।
ज्ञानं जिनो मल्लिनमी च यस्यां सैकादशी नो वितनोतु भद्रम् ॥३॥

पौषासिते पार्श्वजिनस्य दीक्षा पापार्जुनं ज्ञानमिनोऽजितश्च ।
तपस्यकृष्णे ऋषभो जिनोऽभूत् सैकादशी नो वितनोतु भद्रम् ॥४॥

इत्यैकादश वत्सरान् भवभृतो यस्यास्तपो निर्मलं
न्यायोपार्जितया श्रिया विरचते पूर्णे तदुद्यापनम् ।
भक्त्यैकादश लेखयन्ति चतुरैरेकादशाङ्गानी
श्रेयः श्रीततिमातनोतु नितरां सैकादशी नस्तिथिः ॥५॥

## ' अथ द्वादशीचैत्यवन्दनम् ॥१२॥

श्रेय श्रिया भर्तुरभीष्टदातु शुक्रे सुपार्श्वस्य जनिर्वलक्षे ।
राधार्जुने श्रीविमलच्युतिश्च सा द्वादशी नोऽस्तु तिथि शिवाय ॥१॥
नेमिश्च्युति कार्तिककृष्णपक्षे पद्मप्रभस्यापि जनिश्च यस्याम् ।
ऊर्जार्जुने ज्ञानमर प्रपन्न सा द्वादशी नोऽस्तु तिथि शिवाय ॥२॥
माघासिते शीतऽजन्मदीक्षेऽभिनन्दनो माघसितेऽनगार ।
चन्द्रप्रभ पौषसितौ प्रसूत सा द्वादशी नोऽस्तु तिथि शिवाय ॥३॥
मल्लि शिव शुभ्रन आप दीक्षा सिते तपस्येऽप्यसिते जिनोऽभूत् ।
श्रेयासजन्माऽपि तपस्यकृष्णे सा द्वादशी नोऽस्तु तिथि शिवाय ॥४॥

नम्रद्वादशकल्पवासललना जन्मादिमासो जिना
यस्या द्वादश सद्व्रतानि गृहिणा नाशाय दुष्कर्मणाम् ।
भिक्षूणा प्रतिमास्तथा वरतपोभेदाङ्गपूर्वादश
श्रेय श्रीततिमातनोतु नितरा सा द्वादशी नस्तिथि ॥५॥

## अथ त्रयोदशीचैत्यवन्दनम् ॥ १३ ॥

चैत्रार्जुनेऽपश्चिमतीर्थभर्तुर्वीरस्य यस्या जनन बभूव ।
श्रेयासदीक्षा च तपस्यकृष्णे त्रयोदशी साऽस्तु तिथि श्रिये न ॥१॥

वैशाखकृष्णे समवाप यस्यामनन्तमितीर्थपतिस्तु जन्म ।
वैशाखशुक्लऽप्यभिनन्दनोऽर्हन् त्रयोदशी साऽस्तु तिथिः श्रिये नः २
ज्येष्ठासिते जन्म शिवं च शान्तिः सुपार्श्वनीसाऽप्यथ शुक्लपूर्वे ।
मासाभिते श्रीवृषभाङ्कमोक्ष त्रयोदशी साऽस्तु तिथिः श्रिये नः ॥३॥
पद्मप्रभः कार्तिककृष्णपक्षे दीक्षां च्युतो त्यस्तगृहिप्रपञ्च ।
पौषासिते चन्द्रजिनश्च चन्द्रत्रयोदशी साऽस्तु तिथिः श्रिये नः ॥४॥
मासान्तिमे धर्मजिनस्य दीक्षाऽभूद्यत्र कल्याणकरी जनानाम् ।
श्रेयः श्रियामप्युतमाद्यमोक्षत्रयोदशी साऽस्तु तिथिः श्रिये नः ॥५॥

अथ चतुर्दशीस्तवनम् ॥ १४ ॥

वैशाखकृष्णे सुखदायि यत्राऽनन्तो जिन ज्ञानमपि प्रपेदे ।
श्रेयः श्रियां धाम मति न कुन्थुस्तिथिः श्रिये साऽस्तु चतुर्दशी न १
आषाढशुक्ले विगताष्टकर्मा श्रीवासुपूज्य शिवमाप यस्याम् ।
ज्येष्ठासिते शान्तिजिनश्च दीक्षा तिथिः श्रिये साऽस्तु चतुर्दशी नः २
श्रीशीतलो ज्ञानमवाप कृष्णे पौषेऽथ शुक्लेऽप्यभिनन्दनश्च ।
मार्गार्जुने सम्भवजन्म यत्र तिथिः श्रिये साऽस्तु चतुर्दशी नः ॥३॥
जगाम यत्राभिनवार्कतेजा श्रीवासुपूज्यो जननं जिनेन्द्रः ।
तपस्यकृष्णेऽमरवन्दवन्द्यस्तिथिः श्रिये साऽस्तु चतुर्दशी नः ॥४॥

आत्मानन्दविधायिनी भवभृता कल्याणसम्पादिनी
दुष्कर्मौघविनाशिनी च निबिडध्वान्तावलिध्वंसिनी ।
या मुक्तेर्भगिनीभिश्च चतुरैः सेव्यामौर्मासानै
श्रेय श्रीतनिमातनोतु निरता सा नश्चतुर्दश्यरम् ॥ ५ ॥

अमावसाचैत्यवन्दनम् ॥

श्रेय श्रीणा राशिभिर्वर्द्धमानस्त्रीर्थाधीश कार्त्तिके वर्द्धमान ।
मोक्ष लेभे शाश्वतानन्दधाम साऽमावास्या सत्तिथिर्नः श्रिये स्तात् १
नानी जज्ञे श्रीसमुद्रावनीशात्यशःक्षीराम्भोधिवृद्धिदिश्पश ।
नेमिर्यस्यामाश्विने विश्वपूज्य साऽमावास्या सत्तिथिर्नः श्रिये स्तात् २
माघे मासे घातिकर्मण्यतीते श्रीश्रेयांस कस्ली यत्र जज्ञे ।
दीक्षामापद्वासुपूज्याख्यपत्ये साऽमावास्या सत्तिथिर्नः श्रिये स्तात् ३

अथ पूर्णिमाचैत्यवन्दनम् ।

पद्मप्रभो ज्ञानमवाप चैत्रे श्रीसुव्रतोऽर्हन्नभसि च्युतश्च ।
नमिच्युतिश्चाश्विनमासि यस्या सा पूर्णिमा न श्रियमातनोतु ॥१॥
दीक्षा प्रपदे मृगशीर्षमासे श्रीसम्भवस्तीर्थपतिस्तु यस्याम् ।
कैवल्यमूद्धर्मजिनस्तु पौषे सा पूर्णिमा न श्रियमातनोतु ॥२॥
श्रेय श्रीणा धाम कल्याणकानि यस्यामित्थं्यानीति तीर्थङ्कराणाम् ।
यों सन्ये भारत जज्ञिरेऽत्र सा श पुष्यात् पूर्णिमा सत्तिथिर्नः ३

अथ प्रशस्तिः ।

प्रस्फूर्जत्तपगच्छनारकपथप्रोद्भासनाऽहर्मणि-
स्तेजस्विप्रवरोऽजनिष्ट विजयानन्दाभिधः सूरिराट् ।
गोभिर्दूर्णदकघूकसन्ततिरर यस्याऽतिखिन्ना हृदि
नोर्ध्वीकर्त्तुमलं क्षितौ स्ववदनं वादस्य तत् का कथा ? ॥१॥
तच्छिष्य शान्तमूर्त्ति श्रमणगणनुत सद्गुणग्रामधामा ।
जज्ञे विद्वद्वर श्रीमदमरविजयो दाक्षिणात्योपकारी ।
कृत्वा मूर्त्तिद्विषां यो हृदयनयनयोरञ्जनं सप्रमाणं
दूरीचक्रे दयालुर्नवृजिनभवामन्धता ज्ञानवैद्य ॥२॥
तत्पादाम्भोरुहमधुकरव्रातमध्यप्रचारी
स्वल्पप्रज्ञश्चतुरविजयः संयमी ज्ञानभक्त्या ।
एतान्यत्रे नवहयनिधीन्दुप्रमे वैक्रमेऽब्दे
मार्गे शुक्ले शिवमितितिथौ सन्तुतीः सत्तिथीनाम् ॥३॥

